( कुवल० )—अत्युत्कृष्टगुणतया क्वचिदप्युपमानभावम-
मानस्यावर्ण्यस्य वर्ण्योपमेयं परिकल्प्य तावता
तिरस्कारः । पूर्वप्रतीपवैपरीत्येन तृतीयं प्रतीपम् ।

यथा वा—अहमेव गुरुस्सुदारुणाना-
मिति हालाहल मा स्म तात दृप्यः ।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥ १४ ॥

( अ० च० )–वर्ण्योपमेयेति ॥ अन्यस्य वर्ण्यस्य । अनादरोऽपि तथा । प्र
मित्यर्थः ॥ अहमेवेति । सुदारुणानामतितीव्राणाम् । गुरुः श्रेष्ठः । तत
स्यानुकम्पसम्बोधने ॥ मा स्म दृप्य इति । दर्पं मा कृथा इत्यर्थः ॥

( चं० )-वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च त

मुधाऽपवादो मुग्धाक्षि त्वन्मुखाभं किलाम्बुजम् ॥ १

( कुवल० )–अवर्ण्ये वर्ण्योपमित्यनिष्पत्तिवचनं पूर्वभ्य
र्षशालि चतुर्थं प्रतीपम् । उदाहरणे सुधापवादत्वो
पमित्यनिष्पत्तिरुद्घाटिता ।

यथा वा—आकर्णय सरोजाक्षि वचनीयमिदं भुवि ।
शशांकस्तव वक्त्रेण पामरैरुपमीयते ॥ १५ ॥

(अ०चं०)–वर्ण्येनान्यस्येति ॥ निरूपितत्वं तृतीयार्थः। वर्ण्यनिरूपिता
स्यावर्ण्यस्योपमा तस्या इत्यर्थः । अनिष्पत्तिवचः उच्यमाना अनिष्
" कृदभिहिते " इति न्यायात् । तत्प्रतीपम् ॥ मुधेति । किलेति
याम् । त्वन्मुखाभमम्बुजमिति वार्ता मुधा निष्प्रयोजनोऽपवादः।
कार्थकत्वेनापवादस्य निष्प्रयोजनत्वम् ॥ उत्कर्षेति । उपमानतिरस्
तिशयप्रयोजकत्वरूपेत्यर्थः ॥ मुधापवादत्वोक्त्येति । उक्तार्थमे
आकर्णयेति । वचनीयमलीकतया निन्दितम्, अत एव भुवीत्यु
लोकान्तरे सुखसन्निधानेन विशेषादर्शनादलीकत्वग्रहायोगात् ।
धानेऽपि विशेषाग्रहणात्पामरैरित्युक्तम्। अत्र वचनीयं पामरैरित्येता
मुपमितेरनिष्पत्तिः प्रकाश्यते ॥ १५ ॥

( चन्द्रा० )-प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते
दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना ॥ १

व०)-उपमेयस्यैवोपमानप्रयोजनधूर्वहत्वेनोपमान-
कैमर्थ्यमुपमानात्प्रातिलोम्यात्पञ्चमं प्रतीपम् ।

यथा वा-तदोजसस्तद्यशसः स्थिताविमौ
वृथेति चित्ते कुरुते यदायदा ।
तनोति भानोः परिवेषकैतवा-
त्तदा विधिः कुण्डलनां विधोरपि ॥

केचिदनन्वयोपमेयोपमाप्रतीपानामुपमाविशेषत्वेन तद-न्तर्भावं मन्यन्ते । अन्ये तु पञ्चमं प्रतीपप्रकारमुपमानाक्षे-परूपत्वादाक्षेपालंकारमाहुः ॥ १६ ॥

(अ० चन्द्रि०) प्रतीपमिति ॥ कः अर्थः प्रयोजनं यस्य तत्तथा । अनर्थक-मिति यावत् । तस्य भावः कैमर्थ्यं तदपि प्रतीपं मन्वते । आलंकारि-का इति शेषः । ननूपमानस्य पद्मचन्द्रादेराह्लादविशेषरूपप्रयोजन-सत्त्वात्कथमनर्थकत्वमत आह उपमेयस्यैवेति ॥ उपमानधूर्वहत्वेनोप-मानकार्यकारित्वेन । अयं चोपमानकैमर्थ्ये हेतुः । अतश्चोपमानकै-मर्थ्यमित्यध्याहार्यम् । आह्लादविशेषादेरन्यलभ्यत्वेन प्रयोजनत्वासम्भ-वात्कैमर्थ्यमिति भावः । उपमानप्रयोजकधूर्वहत्वेनेति पाठे उपमानं प्रयोजकं यस्या इति बहुव्रीहिः । ननु "उपमानकैमर्थ्यस्योपमानाक्षेपश्चा-क्षेपः" इति वामनसूत्रेणाक्षेपालंकारत्वेनोक्तत्वात्कथं प्रतीपत्वमत आह-उपमानप्रातिलोम्यादिति ॥ उपमानप्रतिकूलत्वादित्यर्थः । प्रतिकूलत्वं च तिरस्कारप्रयोजकत्वमित्युक्तम् । तथा च प्रतीपसामान्यलक्षणा-क्रान्तत्वात्प्रतीपाभाव एवोचित इति भावः ॥ तदोजस इति । नैषधीये नैषधवर्णनमिदम् । विधिर्ब्रह्मा तस्य नलस्यौजसः प्रतापस्य तद्यशसश्च-स्थितौ सत्यामिमौ सूर्यचन्द्रौ वृथा प्रतापज्योत्स्नादेः कार्यस्य ताभ्यामेवो-पपत्तेर्निरर्थकाविति चित्ते यदायदा कुरुते तदा भानोर्विधोश्च परिवेषस्य परिधेः कैतवाच्छलात्कुण्डलनां वैयर्थ्यसूचिकां रेखावेष्टनां करोतीत्यन्व-यः । अत्र च नायं परिवेषः किन्तु कुण्डलनेत्यपह्नुतौ कैमर्थ्यरूपप्रतीपस्या-ङ्गत्वात्तयोरङ्गाङ्गिभावलक्षणः सङ्करः । यद्यत्पापमित्यादिवच्च तत्पदे वीप्साया अकरणं न दोष इति बोध्यम् । केचिद्दण्डिप्रभृतयः ॥ अन-न्वयोपमाप्रतीपानामिति । प्रतीपपदेन चात्राद्यभेदत्रयमेव गृह्यते न त्वन्त्यभेदद्वयमपि । तत्रोपमितिक्रियानिष्पत्तेरभावेनोपमान्तर्भावस्या-सम्भवात् । वस्तुतस्त्वाद्यभेदत्रयस्यापि नोपमान्तर्गतिर्युक्ता । चमत्कारं

प्रति साधर्म्यस्य प्राधान्येनाप्रयोजकत्वात् । सामर्थ्यनिबन्धन उप
तिरस्कार एव हि तत्र चमत्कृतिप्रयोजकतया विवक्षितः न तु सा
मेव मुखतश्चमत्कारितया विवक्षितमिति सहृदयसाक्षिकम् । ए
न्वयोपमेयोपमयोरपि न सादृश्यस्य चमत्कारितया प्राधान्येन वि
किन्तु द्वितीयतृतीयसदृशव्यवच्छेदोपायतयेति न तयोरप्युप
गतिर्युज्यते । अन्यथा सादृश्यवर्णनमात्रेणोपमान्तर्भावे "धैर्यला
गाम्भीर्यप्रमुखैस्त्वमुदन्वतः ॥ गुणैस्तुल्योसि भेदस्तु वपुषैवेदृशेन
इति व्यतिरेकालङ्कारस्याप्युपमान्तर्गतिः स्यात् । तत्र साधर्म्यस
धिकरणं वैधर्म्यमेव चमत्कारे प्रधानं न तु साधर्म्यमिति चेत्तुल्य
प्रतीपादिष्वपीति सहृदयैराकलनीयम् । एतावदेवास्वरसबीजम
न्धायोक्तं केचिदिति । अन्ये वामनादयः । अत्र चास्वरसबीजं प्रा
वेदितम् ॥ १६ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां प्रतीपालङ्कारप्रकरणम् ।

---

## रूपकालंकारः ५

(चन्द्रालो०)-विषय्यभेदताद्रूप्यरञ्जनं विषयस्य य
रूपकं तत्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः ॥१
अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात् ।
अयमास्ते विना शम्भुस्तार्तीयीकं विलोचनम् ॥१
शम्भुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम् ।
अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना ॥१
साध्वीयमपरा लक्ष्मीरसुधा सागरोदिता ।
अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते ॥ २

(अ० चन्द्रि० )-रूपकं लक्षयति-विषय्यभेदेति ॥ रूप्यते इतरव्यावृ
ज्ञायते धर्मी अनेनेति रूपं तद्रूपमस्यासौ तद्रूपस्तस्य भावस्ताद्रूप्यं
कार्यकारित्वादि । विषयिण उपमानस्याभेदताद्रूप्याभ्यां विषयस
यस्य यद्रञ्जनमिव रञ्जनं स्वोपरक्तबुद्धिविषयीकरणमिति यावत्
पकमित्यर्थः । रूपकं तदित्येव पाठः । रूपकं त्विति पाठे तु त
ध्याहार्यम् । उपात्तबिम्बाविशिष्टविषयधर्मिकाहार्यारोपनिश्चयवि

भूतमुपमानाऽभेदताद्रूप्याऽन्यतररूपकमिति तु निष्कर्षः । मुखं चन्द्र इत्यादौ नामार्थयोरभेदान्वयव्युत्पत्तिवशादाहार्यचन्द्राभेदनिश्चयाल्लक्षणसमन्वयः । मुखमपरश्चन्द्र इत्यत्र तु न चन्द्राभेदो विषयः । अपर इति भेदस्य विवक्षितत्वात् । अपि तु चन्द्रकार्यकारित्वरूपं ताद्रूप्यमिति तत्रापि लक्षणसङ्गतिः । न च तस्य मुखे सत्त्वात्कथमारोप इति वाच्यम् । चन्द्रकार्यसजातीयकारित्वस्यैव मुखे सत्त्वादिति । यद्यपि नामार्थयोरभेदान्वयानुरोधादिहापि चन्द्रपदलक्षितस्य तत्कार्यकारिणोऽभेदसंसर्गेणैव मुखेऽन्वयादभेदरूपकमेव । तथाप्युपमानतावच्छेदरूपेणाभेदभाने तु ताद्रूप्यरूपकत्वमिति तात्पर्यम् । अत्र "कमलमनम्भसि कमले कुवलये एतानि कनकलतिकायाम्" इत्याद्यतिशयोक्तिवारणायोपात्तेतिविषयविशेषणम् । आरोपश्च निषेधानङ्कत्वेन विशेषणीयः । तेनापह्नुतौ नातिव्याप्तिः । भ्रान्तिवारणायाहार्येति । "त्वत्पादनखरत्नानां यदलक्तकमार्जनम् । इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥" इति निदर्शनावारणाय–बिम्बाविशिष्टेति ॥ संशयोत्प्रेक्षयोर्निरासाय निश्चयेत्युक्तमिति सङ्क्षेपः ॥ आधिक्येत्यादि । आधिक्यमुपमानस्य स्वाभाविकीमवस्थामपेक्ष्योपमेयतादात्म्यावस्थायां बोध्यम् । एवं न्यूनत्वमपि । अनुभयमाधिक्यन्यूनत्वोभयरहितमभेदताद्रूप्यान्यतरमात्रम् ॥ अयं हीत्यादि । अयं वर्ण्यमानो राजा येन हेतुना पुरोनगर्य्यः । शिवस्यापि त्रिपुरदग्धृत्वात्स एवायमिति भावः ॥ तार्तीयिकमिति । तृतीयमेव तार्तीयीकम् "तीयादीकक्स्वार्थे वा वाच्यः" इति वार्तिकानुसारात् । विलोचनं विनेत्यन्वयः ॥ शम्भुरिति । अत्राप्ययमित्यनुषञ्जनीयम् । अन्यथातिशयोक्त्याऽऽपत्त्या रूपकोदाहरणत्वासङ्गतेः । अद्य राजभावावस्थायां समदृष्टितां समसंख्यलोचनतामेकरूपलोचनवत्तां च ॥ मुखेन्दुनेति । अत्रेन्दुपदमिन्दुकार्यकारिपरम् । किमिन्दुनेति ॥ प्रसिद्धचन्द्राद्भेदविवक्षणात् । अतश्चन्द्रताद्रूप्यरूपकमिदम् । न चात्रोत्तरपदार्थप्रधान्यादिन्दुकार्यकारिणि मुखाभेदभानान्मुखाभेदरूपकं स्यान्न तु चन्द्रताद्रूप्यरूपकमिति वाच्यम् । व्युत्पत्तिवैचित्र्येण मुखस्य स्वनिष्ठाभेदप्रतियोगित्वसंसर्गेणान्वयाभ्युपगमाद्विशेषणानुयोगिकस्यापि विशेषणसम्बंधतायाः स्वामित्वस्य षष्ठ्यर्थत्ववादिभिः प्राचीनैश्चैत्रस्य धनमित्यादावङ्गीकारात् । एवं च मुखनिष्ठाभेदप्रतियोगी चन्द्रस्तत्कार्यकारी वेति बोधान्न मुखाभेदरूपकापत्तिर्मुखप्रतियोगिकाभेदस्याभानादित्येवमन्यत्राप्यूह्यम् ॥ असुधेति । सुधा सागरादुदितोत्पन्ना प्रसिद्धा लक्ष्मीरयं तु न तथेति न्यूनत्वोक्तिः ॥ अतिरिच्यत इति । निष्कलङ्कतया अधिको भवतीत्यर्थः ॥

( कुव० )-विषय्युपमानभूतं पद्मादि विषयस्तदुपमेयं व
नीयं मुखादि विषयिणो रूपेण विषयस्य रञ्जनं रूपकम्
अन्यरूपेण रूपवतः करणात्तच्च क्वचित्प्रसिद्धविषय्यभे
पर्यवसितं क्वचिद्भेदे प्रतीयमान एव तदीयधर्मारोपमा
पर्यवसितम् । ततश्च रूपकं तावद्द्विविधम् । अभेदरू
ताद्रूप्यरूपकं चेति । द्विविधमपि प्रत्येकं त्रिविधम् ।
सिद्धविषय्याधिक्यवर्णनेन न्यूनत्ववर्णनेनानुभयोक्त्
चैवं रूपकं षड्विधम् । अयं हीत्यादिसार्द्धश्लोकेनाभेदर
काणि अस्या मुखेन्दुनेत्यादिसार्द्धश्लोकेन ताद्रूप्यरूप
णि । आधिक्यन्यूनत्वानुभयोक्त्युद्देशक्रमप्रातिलोम्येनो
हृतानि । येन दग्धा इति विशेषणेन वर्णनीये राज्ञि
सिद्धशिवाभेदानुरञ्जनाच्छिवस्य पूर्वावस्थातो वर्णनी
राजभावावस्थायां न्यूनत्वाधिक्ययोरवर्णनाच्चानुभयाभे
रूपकमाद्यम् । तृतीयलोचनप्रहाणोक्त्या पूर्वावस्था
न्यूनताप्रदर्शनान्न्यूनाभेदरूपकं द्वितीयम् । न्यूनत्वव
नमप्यभेददार्ढ्योपादकत्वाच्चमत्कारिविषयदाष्टित्वपरित्
गेन जगद्रक्षकत्वोक्त्या शिवस्य पूर्वावस्थातो वर्णनीय
जभावावस्थायामुत्कर्षविभावनादधिकाभेदरूपकं तृ
यम् । एवमुत्तरेषु ताद्रूप्यरूपकोदाहरणेष्वपि क्रमेणा
भयन्यूनाधिकभावा उन्नेयाः । अनेनैव क्रमेणोदाह
णान्तराणि-

> चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन्सरय्वा
> वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित् ।
> एको वक्ति प्रथमनिहतं कैटभं कंसमन्य-
> स्तत्त्वं स त्वं कथय भगवन्को हतस्तत्र पूर्वम् ॥

अत्र स त्वमित्यनेन यः कंसकैटभयोर्हन्ता गरुडध्वज
त्तादात्म्यं वर्णनीयस्य राज्ञः प्रतिपाद्य तं प्रति कंसकैट

**वधयोः पौर्वापर्यप्रश्नव्याजेन तत्तादात्म्यदार्ढ्यकरणात्पूर्वावस्थात उत्कर्षापकर्षयोरविभावनाच्चानुभयाभेदरूपकम् ॥**

( अ०चं० )–लक्षणश्लोकं व्याचष्टे–विषय्युपमानेत्यादि । विषयिणोऽभेदेन रूपेण चेति पाठः । रूपेण आह्लादकत्वादिना । ताद्रूप्येण क्वचित्ताद्रूप्येण चेत्येव पाठः । परमार्थतस्तु प्रामाणिकपुस्तकेषु विषयिणो रूपेण विषयस्य रञ्जनमिति युक्ततरः पाठः । तेन तच्चेत्यादेर्न पौनरुक्त्यमिति ध्येयम् । हरिद्रादिना पटादिरञ्जने प्रयुक्तस्य रञ्जनशब्दस्येह प्रवृत्तौ बीजमाह–अन्यरूपेणेति । रूपं रक्तपीतादिकम् । अभेदताद्रूप्ये च तथा चान्यदीयधर्मेणान्यस्य तद्वत्तासम्पादनत्वसामान्यादिह गौणरञ्जनशब्दप्रयोग इति भावः ॥ तच्चेति । रञ्जनं चेत्यर्थः ॥ प्रसिद्धेति । कविसम्प्रदायप्रसिद्धोपमानाभेदेन लब्धात्मकमित्यर्थः । रूपपदस्याभेदताद्रूप्योभयसाधारणत्वादिति भावः । अभेदेन रूपेण चेति पाठे तु तच्चेत्यत्र च शब्दो हेत्वर्थकः । तेन पूर्वोक्तस्यैव समर्थनमिति न पौनरुक्त्यम् । तावद्विधान्तरोक्तेः प्रागुद्देशक्रमप्रातिलोम्येनेति । निर्देशक्रमवैपरीत्येनेत्यर्थः । एतदेव विशदयति–येनेत्यादि ॥ विशेषणेनेति हेतौ तृतीया । पुरदग्धृत्वविशेषणहेतुकशिवाभेदानुरञ्जनादित्यर्थः । ननु न्यूनत्ववर्णने भेदापकर्षयोः प्रतीतिः कथं चमत्कारिणीत्यत आह–अभेददार्ढ्यापादकत्वादिति ॥ विशेषनिषेधस्य शेषाभ्यनुज्ञानफलकतया निषिद्धव्यतिरिक्तसकलगुणशालिताप्रतीतौ " एकदेशविकृतमनन्यवद्भवति " इति न्यायेनाभेदनिश्चयसम्पादकत्वादित्यर्थः । विभावनात् प्रकाशनात् । चन्द्रज्योत्स्नेति । राजानं प्रति कस्यचिदुक्तिः । हे भगवन् ! चन्द्रज्योत्स्नावद्विशदं श्वेतं पुलिनं यस्य तथाभूतेऽस्मिन् शरय्वाः शरयूनामकनद्याः सैकते सिकतामयदेशे कयोश्चित्सिद्धतरुणयोश्चिरतरमतिचिरकालं वादरूपं द्यूतमभूत । कीदृक्तत्राह–एकः सिद्धयुवा कैटभं दैत्यविशेषं प्रथमं निहतं वक्ति वदति अन्यः कंसं प्रथमं निहतं वक्ति स कंसकैटभयोर्हन्ता त्वं तत्र तयोर्मध्ये पूर्वं को हत इति तत्त्वं कथयेत्यन्वयः । यद्यपि मुनिप्रभृतावेव भगवन्नित्यामन्त्रणमुचितं न राजादौ तथापि राज्ञो भगवत्तादात्म्यवर्णनादनौचित्यं परिहरणीयम् । क्वचित्तु भवतेति पाठः । अत्र ज्योत्स्नापदेनैव चन्द्रिकालाभेपि चन्द्रपदं शारदपूर्णचन्द्रपरतया नापुष्टार्थम् । पुष्पमालेत्यत्र पुष्पपदमिवोत्कृष्टपुष्पपरतयेति बोध्यम् । वादयोग्यतासूचनाय यूनोरित्युक्तम् । अयं हीत्युदाहरणेऽभेदारोपहेतुभूतं पुरदाहकत्वरूपं साधर्म्यमुपात्तमिह तु जगद्रक्षकत्वादिकं तद्गम्यमानमिति भेदः ।

**( कुव० )–वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च ।**
**तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥**

अत्र साक्षादिति विशेषणेन विरक्तस्य प्रसिद्धशिव-तादात्म्यमुपदिश्य नराकृतिरिति दिव्यमूर्तिवैकल्यप्र-तिपादनान्न्यूनाभेदरूपकम् ।

त्वय्यागते किमिति वेपत एष सिन्धु-
स्त्वं सेतुमन्थकृदतः किमसौ बिभेति ।
द्वीपान्तरेऽपि न हि तेऽस्त्यवशंवदोऽस्य
त्वां राजपुङ्गव निषेवत एव लक्ष्मीः ॥

अत्र त्वं सेतुमन्थकृदिति सेतोर्मन्थनस्य च कर्त्रा पुरु-षोत्तमेन सह वर्णनीयस्य तादात्म्यमुक्त्वा तथापि त्वदा-गमनं सेतुबंधाय मन्थनाय वेति समुद्रेण न भेतव्यम् । द्वी-पान्तराणामपि त्वद्वशंवदत्वेन पूर्ववद्द्वीपान्तरे जेतव्याभा-वात्, प्राप्तलक्ष्मीकत्वेन मन्थनप्रसक्त्यभावाच्चेति पूर्वाव-स्थात उत्कर्षविभावनादधिकाभेदरूपकम् ।

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥

अत्रापरश्शीतांशुरित्यनेन वक्त्रेन्दोः प्रसिद्धचन्द्राद्भे-दमाविष्कृत्य तस्य च प्रसिद्धचन्द्रकार्यकारित्वमात्रप्रति-पादनेनोत्कर्षापकर्षयोरप्रदर्शनादनुभयं ताद्रूप्यरूपकम् ।

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनः शम्भुर्भगवान्बादरायणः ॥

अत्र हरावपर इति विशेषणात्त्रिष्वपि ताद्रूप्यमात्रविवक्षा विभाविता । चतुर्वदनत्वादिवैकल्यं चोक्तमिति न्यूनता-द्रूप्यरूपकम् । इदं विशेषोक्त्युदाहरणमिति वामनमतम् । यदाह–"एकगुणहानौ गुणसाम्यदार्ढ्यं विशेषोक्तिः" इति

किमसुभिर्ग्लपितैर्जड मन्यसे
मयि निमज्जतु भीमसुतामनः ।
मम किल श्रुतिमाह तदर्थिकां
नलमुखेन्दुपरां विबुधः स्मरः ॥

अत्र दमयन्तीकृतचन्द्रोपालम्भे प्रसिद्धचन्द्रो न निर्या-
कालिकमनःप्रवेशश्रुतितात्पर्यविषयः । किन्तु नलमुख-
चन्द्र एवेति । ततोऽस्याधिक्यप्रतिपादनादधिकताद्रूप्यरू-
पकम् । रूपकस्य सावयवत्वनिरवयवत्वादिभेदप्रपञ्चनन्तु
चित्रमीमांसायां द्रष्टव्यम् ॥

( अ०चन्द्रि० )–वेधा इति ॥ द्वेधा कान्ताधर्मिकत्वकनकधर्मिकत्वरूप-
विधाद्वययुक्तं भ्रमं बलवदनिष्टाननुबन्धिसुखसाधनत्वभ्रमम् । सर्वेषा
मपि भ्रमाणां वेधसा निर्माणेऽपि प्राधान्यविवक्षयोत्थमभिधानम् । अय-
मास्त इत्युदाहरणे शम्भुसादृश्यं गम्यमानमिह त्वनासक्तिरूपं तदुपात्त-
मिति भेदः । त्वय्यागत इति राजानं प्रति कवेरुक्तिः । सेतुश्च मन्थ-
श्चेति द्वंद्वः । मन्थनं मन्थोऽमृतमन्थनम् । द्वीपान्तरेऽपि इत्यपिना सुत-
रामेतद्द्वीपे नास्तीति सूच्यते । अत्र राजभावावस्थायां शम्भुर्विश्वमि-
त्यत्र विश्वसंरक्षकत्वं सादृश्यमुपात्तमिह तु नेति भेदः ॥ किम्पद्मस्येति
दयितां प्रति नायकोक्तिः । तव वक्त्ररूपेन्दौ कार्यकारिणि सत्ययमपरः
प्रसिद्धः शीतांशुश्चन्द्रो यदुज्जृम्भते उदितो भवति तस्मात्तव वक्त्रेन्दुः
पद्मस्य रुचिं कान्तिं न हन्ति किम् । "प्रयोजनमनुद्दिश्य न मन्दोऽपि
प्रवर्तते" इति न्यायात्प्रयोजनस्यान्यतः सम्भवे तदुज्जृम्भणस्यासङ्गते-
रिति । किं न हन्ति इति काक्वा अपि तु हन्त्येवेति पर्यवसाने तदुज्जृ-
म्भणं मुधेति प्रतीतिपर्यवसानम् । एवमग्रिमवाक्ययोरपि । झषो मकरः
केतनं चिह्नमस्य तथाभूतस्य समुद्रस्य कामस्य च आलोकनमालोकः
प्रकाशश्च तन्मात्रेण अमृतेन दर्पोऽभिमान उज्जृम्भणहेतुः स्याच्चेदयुक्त-
मेतत् । यत इह वक्त्रेन्दौ बिम्बाधरे तदप्यस्त्येवेति समुचितपदाध्या-
हारेण योजनीयम् । यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दाक्षेपक्षम-
त्वान्न तदनुपादानेपि न्यूनपदत्वदोषः। कार्यकारित्वमात्रेत्यनेनाभेदव्या-
वृत्तिः । अस्या मुखेन्दुनेत्यत्र किमिन्दुनेति पुनरुपादानमात्रं भेदविवक्षा-
ज्ञापकम् । इह त्वपरशब्दस्याप्युपादानमिति विशेषः ॥ अचतुर्वदन
इति । बादरायणो व्यासः । भाले लोचनं यस्येति व्यधिकरणत्वेऽपि
गमकत्वाद्बहुव्रीहिः । ननु हरावपर इति विशेषणात्तदंशे एव ताद्रू-

प्यरूपकं स्यात् इतरांशे त्वभेदरूपकमेवेत्याशङ्कयाह–अत्रेति त्रिष्वपीति ॥ एकत्रानेकारोपरूपायां रूपकमालायामवैरूप्याय तत्पर्यग्राहकस्यैकत्र स्थितस्यापि साधारण्यमेवोचितमिति भावः । अयं च साध्वीत्यादिपूर्वोदाहरणाद्विशेषः । न्यूनरूपकस्य चमत्कारित्वं मुक्तं वृद्धसम्मत्या द्रढयति–इदमिति ॥ यदाहेत्यनन्तरं स इति शेष एकगुणहानावभिहितायामिति शेषः । गुणसाम्यदार्ढ्यं शेषगुणप्रयु साम्याय योगो व्यवच्छेदः। चतुर्वदनत्वाद्येकगुणव्यतिरेकस्य प्रमाणा रसिद्धस्य पुनर्वचनं शेषगुणाभावपरिसंख्यार्थं पर्यवस्यतीति भावः । च रूपकप्रभेदत्वेनैव चमत्कारोपपत्तौ नाऽलङ्कारान्तरत्वं न्यूनत्ववर्णन युक्तम् । सामग्रीकालीनकार्याभावस्य त्वलङ्कारान्तरासंभिन्नस्य तद्ध माणं युक्तमित्यस्वरसो मतमित्यनेन सूचितः ॥ किमसुभिरिति । जडे मूर्खजलमयेतिसाधारणं चन्द्रसम्बोधनम् । ग्लपितैर्नष्टैरसुभिर्निमित्तभू भीमसुताया दमयन्त्या मनो मयि निमज्जतु निलीयतामिति मन्यसे मिति सोपहासकाकुः । तेन मैवं मंस्था इत्यर्थः । अत्र हेतुमाह–किल श्चितम् । मम विबुधः पंडितः स्मरः तदर्थिकां सः प्राणनिर्गमकाली मनःप्रवेशोऽर्थो यस्यास्तां श्रुतिं नलमुखेन्दुपरां मनःप्रवेशाधिकरणत्वे नलमुखचन्द्रतात्पर्यवतीमाहेति । अयं कलंकिन इत्युदाहरणे दोषशून् त्वप्रयुक्तं शाब्दमाधिक्यम्, इह तु गुणविशेषप्रयुक्तं गम्यमानं तदि विशेषः॥ सावयवत्वनिरवयवत्वादीति । आदिना समस्तवस्तुविषयत्वा दिरूपैतत्प्रभेदानां परम्परितत्वरूपभेदान्तरस्य च परिग्रहः । तथा हि स वयवं निरवयवं परम्परितं चेति त्रिविधं रूपकं प्रत्येकं क्रमेण द्विविधम समस्तवस्तुविषयमेकदेशविवर्ति च केवलं माला च श्लिष्टवाचकमश्लि ष्टवाचकं चेति श्लिष्टाश्लिष्टभेदयोः केवलमालारूपत्वाभ्यामंत्यं चतुर्वि धमित्यष्टौ भेदाः । तत्र "ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारका स्थीन्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् । द्वीपाद्द्वीपं भ्रमं दधती चन्द्रमुद्राङ्कपाले न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन॥ इति पद्ये रात्रौ कापालिकीत्वारोपस्य प्रधानतयाऽवयविनोऽवयवरू पाणि ज्योत्स्नाभस्मेत्यादिरूपकाणीति सावयत्वं समस्तस्य वस्तु आरोप्यमाणस्य शब्दविषयत्वं च द्रष्टव्यम् । "प्रौढमौक्तिकरुचः पयो मुचां बिन्दवः कुटजपुष्पबन्धवः । विद्युतां नभसि नाट्यमण्डले कुर्वते स्म कुसुमाञ्जलिश्रियम् ॥" इत्यत्र प्रधानस्य नभसि नाट्यमण्डलत्वारो पस्यावयवभूतं विद्युतां नर्तकीत्वरूपणमार्थं न शाब्दमित्येकदेशे विशे षेण शाब्दतया वर्तनादेकदेशविवर्तित्वम् । "कुरंगीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् । अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिज

प्रेमलतिकाम् ॥" इत्यत्र प्रेमलतिकामित्यमालारूपं निरवयवम् । "सौन्दर्यस्य तरंगिणी तरुणिमोत्कर्षस्य हर्षोद्गमः कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः । विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥" इत्यत्र च मालारूपं निरवयवं बोध्यम् । एवम् "अलौकिकमहालोकप्रकाशितजगत्त्रयः । स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान् ॥" इत्यत्र वेणुकुलयोः श्लिष्टेन वंशपदेन कुले वेणुत्वारोपपूर्वक एव राज्ञि मुक्तारत्नत्वारोप इति श्लिष्टवाचकं केवलपरम्परितरूपकं विद्वन्मानसेत्यादावेतदेव मालारूपम् । चतुर्दशलोकवल्लिकन्द इत्यत्राश्लिष्टवाचकं केवलपरम्परितम् । पर्यङ्को राजलक्ष्म्या इत्यादावलानं जयकुञ्जरस्येत्यादौ चाश्लिष्टवाचकं मालापरम्परितं च द्रष्टव्यम्, विस्तरभयान्नेह प्रपञ्च्यते ॥१७॥१८॥१९॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां रूपकालङ्कारप्रकरणम् ॥५॥

---

## परिणामालंकारः ६.

चन्द्रा० ) परिणामः क्रियार्थश्चेद्विषयी विषयात्मना ।
प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा ॥ २० ॥

कुव० )—यत्रारोप्यमाणो विषयी किञ्चित्कार्योपयोगित्वेन निबध्यमानः स्वतस्तस्य तदुपयोगित्वासम्भवात्प्रकृतात्मतापरिणतिमपेक्षते तत्र परिणामालंकारः । अत्रोदाहरणम् प्रसन्नेनेति । अत्र हि अब्जस्य वीक्षणोपयोगित्वं निबध्यते न तु दृशः । मयूरव्यंसकादिसमासेन उत्तरपदार्थप्राधान्यात् । न चोपमितसमासाश्रयणेन दृगब्जमिवेति पूर्वपदप्राधान्यमस्तीति वाच्यम्, प्रसन्नेनेति सामान्यधर्मप्रयोगात् । "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति तदप्रयोग एवोपमितसमासानुशासनात् । अब्जस्य वीक्षणोपयोगित्वं न स्वात्मना सम्भवत्यतस्तस्य प्रकृतदृगात्मतापरिणत्यपेक्षणात्परिणामालंकारः ।

यथा वा-तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीयस्तस्मै सौमित्रिमैत्रीमयमुपकृतवानातरं नाविकाय ।

व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदश्चदक्षं
कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं प्रतस्थे ॥

अत्रारोप्यमाण आतरः सौमित्रिमैत्रीरूपतापत्त्या गुहोपका
लक्षणकार्योपयोगी न स्वात्मना गुहस्य रघुनाथप्रसादैव
र्थित्वेन वेतनार्थित्वाभावादिति परिणामालंकारः ॥ २०

( अ०चंद्रि० )-परिणामं लक्षयति-परिणाम इति । विषयिनिष्ठायाः प्र
तकार्योपयोगिताया अवच्छेदिका विषयतात्मतापरिणतिः परिणाम
सा च विषयतादात्म्याध्यवसायविषयता । एवं च विषयाभेदस्यैव वि
यिणि विवक्षणाद्दृगभिन्नेनाब्जेनेति स्वारसिक एव बोधो न तु रूपक
दृङ्निष्ठाभेदप्रतियोगिनाब्जेनेत्यनुयोगित्वमुख इति रूपकाद्भेदो बोध
असमासेऽप्युदाहरति-तीर्त्वेति । मुरारिनाटकगतमेतत्पद्यम् । आत्म
तृतीयः सीतालक्ष्मणसहित इति यावत् । असौ प्रक्रान्तो रामः भूतेश
शम्भोर्मौलिमालारूपाममरनदीं गङ्गां तीर्त्वा तस्मै नाविकाय गुहसंज्ञ
निषादपतये सौमित्रेर्लक्ष्मणस्य मैत्रीरूपमातरं तरणमूल्यमुपकृतव
उपकाररूपतया दत्तवान् । अथो अनन्तरं चित्रकूटं प्रति प्रतस्थे प्रति
तवान् । कीदृशः । व्यामेन तिर्यक्प्रसारितभुजद्वयान्तरालेन ग्रा
तावत्परिणाहौ स्तनौ यासां तथाभूताभिः शबराणां व्याधानां यु
तीभिः कौतुकेनोदश्चंति विकसंत्यक्षीणि यत्र क्रियायां तथा कृच्छ्रात
शात् अत एव क्षणमन्वीयमानोऽनुगम्यमान इत्यर्थः ॥ २० ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां परिणामालङ्कारप्रकरणम्॥

---

## उल्लेखालंकारः ७.

(चन्द्रालो०)-बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते।
स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः॥२

( कुव० )-यत्र नानाविधधर्मयोग्यं वस्तु तत्तद्धर्मयोगरूपनि
मित्तभेदेनानेकेन ग्रहीत्राऽनेकधोलिख्यते तत्रोल्लेखः । अ
नेकधोल्लेखने रुच्यर्थित्वभयादिकं यथार्हं प्रयोजकम् । रु
चिरभिरतिः । अर्थित्वं लिप्सा । स्त्रीभिरित्याद्युदाहरणम्
अत्रैक एव राजा सौन्दर्यवितरणपराक्रमशालीति कृत्वा

स्त्रीभिरर्थिभिः प्रत्यर्थिभिश्च रुच्यर्थित्वभयैः कामकल्पतरुकालरूपो दृष्टः।

यथा वा—गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः।
यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम् ॥

अत्र यस्तथा भीतं भक्तं गजं त्वरया त्रायते स्म सोऽयमादिपुरुषोत्तम इति वृद्धाभिः संसारभीतया तद्भयार्थिनीभिः कृष्णोऽयं मथुरापुरं प्रविशन्दृष्टः। यस्तथा चञ्चलत्वेन प्रसिद्धायाः श्रियोऽपि कामोपचारवैदग्ध्येन नित्यं वल्लभः सोऽयं दिव्ययुवेति युवतिसमूहैः सोत्कण्ठैर्दृष्टः। बालाभिस्तद्बाह्यगतरूपवेषालङ्कारदर्शनमात्रलालसाभिर्यथास्थितवेषादियुक्तो दृष्ट इति बहुधोल्लेखः। पूर्वं कामत्वाद्यारोपरूपकसङ्कीर्णः। अयं तु शुद्ध इति भेदः ॥ २१ ॥

अ०चन्द्रि० )—अथोल्लेखालङ्कारं लक्षयति—बहुभिरिति। एकस्य बहुधोल्लेखादित्यन्वयः। उल्लेखनं विषयीकरणमुल्लेखः। हेतौ पञ्चमी। तथा चैवंविधोल्लेखाद्धेतोरुल्लेख इष्यते। उल्लेख इति व्यवह्रियत इत्यर्थः। व्यवहारं प्रति लक्षणस्य प्रयोजकत्वात् स्त्रीभिरिति। स्वर्द्रुः स्वर्गसम्बन्धिद्रुमः कल्पतरुः। कालो यमः। स प्रकृतो राजा। श्लोकं व्याचष्टे—यत्रेति ॥ नानाविधेति। सौन्दर्यदातृत्वशूरत्वादिरूपे इत्यर्थः॥ तत्तद्धर्मेति। रुच्यर्थित्वत्रयादिरूपेत्यर्थः। एतच्च स्वरूपकथनं न तु लक्षणान्तर्गतम् ननु द्वाभ्यां ग्रहीतृभ्यां निमित्तद्वयवशात्प्रकारद्वयेनोल्लेखेऽव्याप्तिरत आह—अनेकेत्यादि। तथा च लक्षणे बहुपदमनेकपरमिति भावः। एवं च ग्रहीतृविषयाद्यन्यतमानेकत्वप्रयुक्तमेकस्योल्लिख्यमानानेकप्रकारत्वमुल्लेख इति लक्षणं बोध्यम्। सौन्दर्यस्य तरङ्गिणीत्यादिमालारूपकवारणायाद्यं विशेषणम्। तत्र ग्रहीतृभेदप्रयुक्तं नानेकप्रकारत्वमिति नातिव्याप्तिः। वक्ष्यमाणोल्लेखप्रभेदसाधारण्यायान्यतमत्वप्रवेशः। तद्विवेचनं तद्व्याख्यानावसरे करिष्यामः। अन्यतमानेकत्वप्रयुक्तमेकस्योल्लिख्यमानत्वमित्येतावदुक्तौ "विद्याविक्रमसौन्दर्यतपसां निधिमागतम्। पश्यन्ति विबुधाः शूराः स्त्रियो वृद्धाश्च कौतुकात् ॥" इत्यत्रातिव्याप्तिरतोऽनेकप्रकारत्वमित्युक्तम्। न चोल्लिख्यमानप्रकारत्वमित्येवास्तु। उक्तोदाहरणे प्रकारस्य कस्याप्यनुल्लेखादेवानतिप्रसङ्गादिति वाच्यम्। एवमपि "नृत्यत्त्वद्वाजिराजिप्रसरखुरपुटप्रोद्धतैर्धूलिजालैरा-

लोकालोकभूमीधरमतुलनिरालोकभावं प्रयाते। विश्रान्तिं काम रजनिरिति धिया भूतले सर्वलोकाः कोकाः क्रन्दन्ति शोकानलवि तया किञ्च नन्दन्त्युलूकाः ॥" इत्यत्र धूलिजालरूपस्यैकवस्तुनो लौककोकोलूकैर्ग्रहीतृभिरेकेनैव रजनीत्वेन प्रकारेणोल्लेखनादतिव्य वारणाय प्रकारेऽनेकत्वोपादानस्यावश्यकत्वात् । "सिञ्जानैर्मञ्ज स्तनकलशयुगं चुम्बितं चञ्चरीकैस्तत्रासोल्लासलीलाः किसलयमन पाणयः कीरदष्टाः । तल्लोपायालपंत्यः पिकनिनदभिया ताडि काकलोकैरित्थं चोलेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम्। इत्यनेकभ्रान्तिपरम्परायामतिप्रसङ्गवारणार्थमेकस्येत्युक्तमिति संक्षेप यथार्हमिति । स्त्रीभिः कामत्वोल्लेखे तासां रुचिरनुरागः प्र जकः, अर्थिभिः कल्पतरुत्वोल्लेखे तेषां लिप्सा प्रयोजिका, शत्रुभि मत्वोल्लेखे तेषां भयं प्रयोजकमित्येवं यथायोग्यमित्यर्थः । उदाहरणा रमाह–यथा वेति। गजत्रातेति ॥ श्रीकृष्णस्य मथुराप्रवेशवर्णनम् । शौ श्रीकृष्णः वृद्धाभिर्गजत्रातेति दृष्ट इत्याद्यन्वयः । सकौतुकं सोत्कण मिति दर्शनक्रियाविशेषणं सर्वत्र सम्बध्यते। श्लोकं व्याचष्टे–य इति तथा महाग्राहग्रहणेन । युवतिसमूहैस्तरुणीसमूहैः । पूर्वमिति । उदाह इति शेषः । उल्लेख इत्यनुषज्यते । आरोपरूपकसंकीर्ण इति पाठे आर पस्वरूपं यद्रूपकं तत्सङ्कीर्ण इत्यर्थः । आरोपरूपकेति पाठस्तु स्पष्ट एव ॥ २१ ॥

( चन्द्रा० )–एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः ।
गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने ॥२२

( कुव० )–ग्रहीतृभेदाभावेऽपि विषयभेदाद्बहुधोल्लेखनादसा ल्लेखः । उदाहरणं श्लेषसङ्कीर्णम् । वचोविषये महान्पटुरि त्यादिवद्बृहस्पतिरित्याद्यर्थान्तरस्यापि क्रोडीकरणात् शुद्धो यथा–अकृशं कुचयोः कृशं विलग्ने

विपुलं चक्षुषि विस्तृतं नितम्बे ।
अधरेऽरुणमाविरस्तु चित्ते
करुणाशालि कपालिभागधेयम् ॥ २२ ॥

(अ०चन्द्रि०)–उल्लेखप्रभेदान्तरमाह–एकेनेति । व्याचष्टे–ग्रहीत्रिति। विषय भेदादित्यनन्तरमेकस्येति शेषः । विषयपदमाश्रयसम्बन्धिनोरुपल णम् । अत एव लक्षणे ग्रहीतृविषयादीत्यादिपदेन तत्संग्रहः कृतः । त

विषयसप्तमीनिर्दिष्टो विषय इत्युच्यते, अधिकरणसप्तमीनिर्दिष्टस्त्वाश्रयः, षष्ठ्यादिनिर्दिष्टः सम्बन्धीति विवेकः । गुरुरित्यस्यार्थकथनं महानिति । "गुरुर्महति वाच्यवत्" इति विश्वकोशात् । पटुरिति तु तात्पर्यपर्यवसितार्थकथनम् । पटुर्दक्ष इत्यादीत्यादिना कीर्तिविषयेऽर्जुनो धवल इतिवत्पार्थ इत्यर्थान्तरस्य धनुर्विषये भीष्मो भीषण इतिवद्गाङ्गेय इत्यर्थान्तरस्य च संग्रहः । "भीष्मस्तु भीषणे रुद्रे गाङ्गेये च निशाचरे ।" इति विश्वः । क्रोडीकरणादेकवृन्तगतफलद्वयन्यायेन सङ्ग्रहात् ॥ अकृशमिति । कपालिनो हरस्य भागधेयं भाग्यं तत्त्वेनाध्यवसितं पार्वतीस्वरूपं चित्ते आविरस्तु प्रकटीभवत्विति सम्बन्धः । किम्भूतम् । कुचयोः कुचविषये अकृशं स्थूलम् । एवमग्रेऽपि । विलग्नो मध्यः "विलग्नो मध्यलग्नयोः" इति विश्वः । विपुलमायतम् । अधरे अधरोष्ठे अरुणमारक्तम् । अरुणाधरमिति पाठस्तु प्रक्रमभङ्गादयुक्तः ॥ चित्ते इति । करुणाशालीत्यत्रापि मध्यमणिन्यायेन सम्बध्यते । एवम् " तुषारास्तापसव्राते तामसेषु च तापिनः । हगन्तास्ताडकाशत्रोर्भूयासुर्मम भूतये ॥ " इत्यादावधिकरणानेकत्वप्रयुक्तः "यमः प्रतिमहीभृतां हुतवहोऽसि तन्नीवृतां सतां खलु युधिष्ठिरो धनपतिर्धनाकांक्षिणाम् । गृहं शरणमिच्छतां कुलिशकोटिभिर्निर्मितं त्वमेक इह भूतले बहुविधो विधात्रा कृतः ॥ " इत्यादौ सम्बन्धिभेदप्रयुक्तश्चोल्लेखो द्रष्टव्य इति दिक् ॥ २२ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामुल्लेखालङ्कारप्रकरणम् ॥७॥

---

## स्मृतिभ्रान्तिमत्ससंदेहालंकाराः ८–९–१०.

(चं० )-स्यात्स्मृतिभ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयम् ।
पङ्कजं पश्यतः कान्तामुखं मे गाहते मनः ॥ २३ ॥
अयं प्रमत्तमधुपस्त्वन्मुखं वेत्ति पङ्कजम् ।
पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः ॥ २४ ॥

(कुवल० )–स्मृतिभ्रान्तिसन्देहैः सादृश्यान्निबध्यमानैः स्मृतिमान्भ्रान्तिमान्सन्देह इति स्मृत्यादिपदाङ्कितमलङ्कारत्रयं भवति । तच्च क्रमेणोदाहृतम् ।

यथा वा–दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।

उद्वीक्ष्य श्रियमिव कांचिदुत्तरन्ती-
मस्मार्क्षीज्जलनिधिमन्थनस्य शौरिः ॥

पूर्वत्र स्मृतिमदुदाहरणे सदृशस्यैव स्मृतिरत्र सदृश क्ष्मीस्मृतिपूर्वकं तत्सम्बन्धिनो जलनिधिमन्थनस्य स्मृतिरिति भेदः ।

पलाशमुकुलभ्रान्त्या शुकतुण्डे पतत्यलिः ।
सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति ॥

अत्रान्योन्यविषयभ्रान्तिनिबन्धनः पूर्वोदाहरणाद्विशे

जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः ।
किङ्कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जनाः ॥

पूर्वोदाहृतसन्देहोऽप्रसिद्धकोटिकोऽयं तु कल्पित-कोटिक इति भेदः ॥ २३ ॥ २४ ॥

( अ०चन्द्रि० )–अथ ज्ञानप्राधान्यसाम्यात्स्मृत्यादीनलङ्कारान् लक्षय स्यादिति ॥ स्मृतिभ्रान्तिसन्देहैर्व्यवहर्तव्यतया हेतुभूतैस्तदङ्कं तेषा स्तदङ्कः, तदङ्को विद्यतेऽस्मिन् तथाभूतम् । मत्वर्थीयाच्प्रत्ययात् । श्चिह्नं संज्ञेति यावत् । तेन तत्संज्ञासंज्ञितमित्यर्थः । अलङ्कृतित्रयं वहारविषयः स्यादिति योजना । एवं च स्मृतित्वभ्रान्तित्वसन्देह नि त्रीणि लक्षणानि । तत्र स्मृतित्वं तावत्स्मरामीत्यनुभवसाक्षि जातिविशेषः । भ्रान्तित्वं विशेष्यावृत्तिप्रकारकज्ञानत्वम् । सन्देहत्वं निश्चयभिन्नत्वे सति सम्भावनाभिन्नज्ञानत्वं पारिभाषिकम् । स्मृति न्त्यादिवारणाय सत्यन्तम् । उत्प्रेक्षावारणाय सम्भावनाभिन्नेति । च त्कारित्वं पुनरखिलालङ्कारसाधारणलक्षणत्रयेऽपि निवेशनीयम् । तेन घट इति स्मृताविदं रजतमिति भ्रान्तावयं स्थाणुः पुरुषो वेति सं नातिप्रसङ्ग इति ध्येयम् । गाहते आकलयति स्मरतीति यावत् । सा श्यान्निबध्यमानैरिति चमत्कारित्वोपलक्षकम् । न त्वेतस्यापि स्वातन्त्र्ये लक्षणे प्रवेशः । सादृश्यामूलकानामपि स्मृत्यादीनां चमत्कारित्वेऽल रताया अनिवार्यत्वाच्चमत्कारितैकजीवातुत्वात्तस्याः । अचमत्कारि तु तेनैव वारणमिति व्यर्थं सादृश्यहेतुकत्वविशेषणम् । न चैतदेवोपा यतां न तु चमत्कारित्वविशेषणमिति वाच्यम्, उदाहृतेषु सादृश्यमू कस्मृत्यादिष्वतिप्रसङ्गवारणार्थं तस्यावश्यकत्वादिति संक्षेपः । दिव नामिति माघे जलक्रीडावर्णनप्रस्तावे पद्यमिदम् । शौरिः श्रीकृष्णोऽ

स्तो जलादुत्तरन्तीं निर्गच्छन्तीं श्रियमिव श्रीसदृशीं कांचित्पुरस्तादग्रे उद्वीक्ष्य जलनिधिमन्थनस्य अस्मार्क्षीत्स्मृतवान् । "अधीगर्थ-" इति कर्मणि षष्ठी । किम्भूताम् । दिवि भवा दिव्यास्तेषां देवानामपि सौन्दर्यातिशयेन कृताश्चर्यां तथा स्फुरता अरविन्देन कमलेन चारू रमणीयो हस्तो यस्यास्तथाभूताम् । तथा चैवंविधनायिकासदृशलक्ष्मीस्मरणात्तत्सम्बन्धिजलनिधिमन्थनस्मरणमिति भावः । अत्र श्रियमिवेत्युपमायाः स्मृत्यङ्गत्वात्तयोरङ्गाङ्गित्वलक्षणः सङ्करः ॥ पलाशेति । वक्रिमलौहित्यरूपसादृश्याद्भ्रान्तिः । अलिर्भ्रमरः । सोऽपि शुकोऽपि । भ्रान्तिनिबन्धन इति भ्रान्तिप्रयुक्त इत्यर्थः ॥ जीवनेति । जीवनं जलं प्राणसंयोगश्च । अथवा जीवन्त्यनेनेति जीवनं धनम् । नम्रा अधोमुखा विनीताश्च । उन्नता ऊर्ध्वमुखा उद्धताश्च । घटीयन्त्रमेकरज्जुसम्बन्धघटमालारूपम् । भाषायां रहट इति प्रसिद्धम् ॥ कलिपतेति । घटीयन्त्रसम्बन्धिनोर्ज्येष्ठकनिष्ठयोः कोटयोरप्रसिद्धेरिति भावः ॥ २३ ॥ २४ ॥

त्यलङ्कारचं०कुव०टीकायां स्मृतिभ्रान्तिसन्देहालङ्कारप्रकरणम् ॥८-१०॥

## अपहृत्यलंकारः ११.

(चन्द्रालो०)–शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः ।
नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥२५॥

(कुवल० )–वर्णनीये वस्तुनि तत्सदृशधर्मारोपफलकस्तदीयधर्मनिह्नवः कविमतिविकासोत्प्रेक्षितधर्मान्तरस्यापि निह्नवः शुद्धापह्नुतिः। यथा चन्द्रे वियन्नदीपुण्डरीकारोपफलकस्तदीयधर्मस्य चन्द्रत्वस्यापह्नवः ।

यथा वा–अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च सञ्जगदिरे भूच्छायमैच्छन्परे ।
इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥

अत्रौत्प्रेक्षिकधर्माणामप्यपह्नवः परपक्षत्वोपन्यासादर्थसिद्धः ॥ २५ ॥

(अ०चं०)–अथापह्नुतिः । तत्र तावदभेदप्रतिपत्तिनिरूपिताङ्गाङ्गित्वान्यतरवान्निषेधोऽपह्नुतिरित्यपह्नुतिसामान्यलक्षणम् । निषेधश्च नञादिसत्त्वे

वाच्यः । क्वचित्तु तदभावात्कैतवादिपदैः परमतत्त्वोपन्यासादि
व्यङ्ग्यः । तथा क्वचिदभेदप्रतिपत्तिसमानाधिकरणः क्वचित्तु तद्व्य
करण इति विवेकः । एवमभेदः क्वचिदारोप्यमाणः क्वचित्तु स्वाभा
कः । एवं तत्प्रतिपत्तिरपि क्वचिद्व्यञ्जनया प्रायशस्तु वाच्यवृत्त्येति
ध्यम् । निषेधोऽपह्नुतिरित्येतावदुक्तौ "न द्यूतमेतत्कितव क्रीडनं नि
तैः शरैः ।" इति प्रसिद्धनिषेधानुवादरूपे प्रतिषेधालङ्कारेऽतिव्या
तोऽभेदप्रतिपत्तिनिरूपितेत्यादिविशेषणमुपात्तम् । तत्र हि युद्ध
कितवं प्रति युद्धे द्यूतत्वाभावो निर्ज्ञातोऽपि कीर्त्यमानो द्यूत एव
प्रागल्भ्यं न तु युद्धे इत्युपहासार्थो न तु युद्धाभेदप्रतिपत्त्यङ्गं तस्यास्
पन्यासं विनाऽपि सिद्धत्वात् । नाप्यङ्गिभूतः । निर्ज्ञातत्वेन तदुपा
पेक्षणादिति तद्वारणम् । अभेदप्रतिपत्तिनिरूपिताङ्गित्वमात्रोक्तौ शु
पह्नुतिहेत्वपह्नुतिपर्यस्तापह्नुतिकैतवापह्नुतिष्वव्याप्तिः । तत्र सर्वत्र '
सुधांशुः' इत्यादेर्निषेधस्य व्योमगङ्गासरोरुहाद्यभेदप्रतिपत्त्यर्थत्वेन त
ङ्गतयाङ्गित्वाभावात् । अभेदप्रतिपत्तिनिरूपिताङ्गत्वमात्रोक्तौ च भ्रान्
पह्नुतिच्छेकापह्नुत्योरव्याप्तिः । तयोर्भ्रान्तिशङ्कानिवारणरूपनिषेध
प्राधान्येनाभेदप्रतिपत्त्यङ्गत्वाभावादतस्तदन्यतरवस्त्वनिवेशः । तद्
"साम्यायापह्नवो यत्र सा विज्ञेया त्वपह्नुतिः । अपह्नवाय साद्दश्यं यस्मि
षाप्यपह्नुतिः॥" इति । सर्वं चैतत्तदुदाहरणव्याख्यानावसरे व्यक्तीभ
ष्यतीति न प्रपञ्चितम् । एवं सामान्यलक्षणं मनसि निधाय शुद्धापह्नु
दींस्तद्भेदान्वक्तुमुपक्रमते–शुद्धापह्नुतिरिति ॥ लक्षणं व्याचष्टे–वर्ण
इति॥कविमतेर्विकासः स्फूर्तिशालिता। तथा चोपमेये उपमानारोपफ
उपमेयधर्मत्वाभिमतनिषेधः शुद्धापह्नुतिलक्षणमिति भावः। अत्र चातु
निमित्तत्वं कैतवादिपदाव्यङ्ग्यत्वं च निषेधविशेषणं बोध्यम् । 
हेत्वपह्नुतौ कैतवापह्नुतौ च नातिप्रसङ्गः । कान्तः किं न हि नूपुर
छेकापह्नुतावुपमेयधर्मस्य कान्तत्वस्य निषेधसत्त्वादतिप्रसङ्गवारणाय
विशेषणं तत्र हि न कान्तत्वनिषेधो नूपुरारोपार्थोऽपि तु नूपुरारोप
शङ्कितकान्तत्वनिषेधार्थ इति तद्व्यावृत्तिः। पर्यस्तापह्नुनिवारणायोप
यधर्मेत्युक्तम् । तत्रोपमानधर्मस्यैव सुधांशुत्वादेर्निषेध इति नातिव्याप्ति
रिति सर्वं सुस्थम् ॥ पुण्डरीकेति। 'पुण्डरीकं सिताम्भोजम्' इत्यमर
एवं च सरोरुहपदं विशेष्यपरमिति भावः ॥ अङ्कमिति। इन्दौ दलितस
स्फुटितस्येन्द्रनीलमणेः शकलवच्छयामं यदरीदृश्यते तत्केऽपि कवय
ऽङ्कं कलङ्कं शशङ्किरे शङ्कितवन्तः । परेऽन्ये जलनिधेः पङ्कं मेनिरे
कतिचित्पुनः सारंगं संजगदिरे अब्रुवन् । परे इतरे भुवो भूमेश्छाय
भूच्छायम् ऐच्छन् । "विभाषासेनासुराच्छाया-" इत्यादिना क्लीबत्वम्

त्रयं तु सान्द्रं घनं निशि रात्रौ पीतम् अत एव कुक्षिस्थमन्धतमसंगाढ-ध्वान्तमाचक्ष्महे ब्रूमह इत्यन्वयः। औत्प्रेक्षिकाऽत्प्रेक्षामात्रविषयाः कल-ङ्कादयः। अपिना स्वाभाविकस्य भूच्छायत्वस्य समुच्चयोऽर्थसिद्ध इति। "नायं सुधांशुः" इत्यत्र नेतिशब्दोपात्तत्वाच्छाब्दः। इह तु परमतत्वो-त्कीर्तनेन स्वानभिमतत्वसूचनादर्थगम्य इत्यर्थः। एकत्रानेकापह्नवरूप-तयाप्यत्र वैचित्र्यं बोध्यम्॥ २५॥

(चन्द्रा०)–स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिः।
नेन्दुस्तीव्रो न निश्यर्कः सिन्धोरौर्वोऽयमुत्थितः॥२६॥

(कुव०)–अत्र चन्द्र एव तीव्रत्वनैशत्वयुक्तिभ्यां चन्द्रत्वसूर्य-त्वापह्नवो वडवानलत्वारोपार्थः।

यथा वा–मन्थानभूमिधरमूलशिलासहस्र-
सङ्घट्टनव्रणकिणः स्फुरतीन्दुमध्ये।
छायामृगः शशक इत्यतिपामरोक्ति-
स्तेषां कथंचिदपि तत्र हि न प्रसक्तिः॥

अत्र चन्द्रमध्ये मन्थनकालिकमन्दरशिलासङ्घट्टनव्रणकि-णस्यैव छायादीनां सम्भवो नास्तीति छायात्वाद्यपह्नवः पामरवचनत्वोपन्यासेनाविष्कृतः॥ २६॥

(अ०चं०)–हेत्वपह्नुतिमाह–स एवेति॥ शुद्धापह्नव एवेत्यर्थः। युक्तिपूर्व इति। योज्यते साध्यमनेनेति युक्तिर्हेतुस्तत्पूर्वस्तत्सहित इत्यर्थः। तथा च शुद्धापह्नवलक्षण एवानुक्तनिमित्त इत्यस्य स्थाने उक्तनिमित्त इत्युक्तौ हेत्वपह्नुतिलक्षणं सम्पद्यत इति भावः। नेन्दुरित्यादि विरहाकुलोक्तिः। तीव्रो दारुणो यतोऽतो नेन्दुः। निशि रात्रौ सत्त्वान्नार्कः। 'और्वस्तु वाडवो वडवानलः' इत्यमरः॥ नैशत्वेति। निशि भवो नैशस्तत्त्वमित्यर्थः। अत्रापि चन्द्रत्वं स्वाभाविको धर्मः। सूर्यत्वं त्वौत्प्रेक्षिकमिति ध्येयम्॥ मन्थानेति। मन्थानो मन्थनदण्डः स चासौ भूमिधरः पर्वतो मन्दर-स्तस्य मूलभारो यच्छिलासहस्रं तेन संघट्टनाद्यो व्रणस्तस्य किणश्चिह्न-मिन्दुमध्ये स्फुरति प्रकाशते। छाया भूमेः। मृगो हरिणः। शशकः शशः इत्येषामतिपामराणां मूर्खतमानामुक्तिः। हि यस्मात्तेषां छायादीनां तत्रेन्दुमध्यभागे कथञ्चिदपि केनापि प्रकारेण प्रसक्तिर्नास्तीत्यन्वयः। 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः॥ नास्तीति। इति हेतोरित्यर्थः॥ २६॥

**(चन्द्रा०)-अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः।**
**नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ॥२**

( कुवल० )-यत्र क्वचिद्वस्तुनि तदीयधर्मनिह्नवः । अ
वर्णनीये वस्तुनि तस्य धर्मस्यारोपार्थः पर्यस्तापह्नु
यथा चन्द्रे चन्द्रत्वनिह्नवो वर्णनीये मुखे तदारोपा
यथा वा-हालाहलो नैव विषं विषं रमा
जनाः परं व्यत्ययमत्र मन्वते ।
निपीय जागर्ति सुखेन तं शिवः
स्पृशन्निमां मुह्यति निद्रया हरिः ॥
पूर्वोदाहरणे हेतूक्तिर्नास्ति अत्र तु सास्तीति विशेषः।
ततश्च पूर्वापह्नुतिवदत्रापि द्वैविध्यमपि द्रष्टव्यम् ॥ २७।

( अ०चं०)-पर्यस्तापह्नुतिमाह-अन्यत्रेति ॥ सः अपह्नवः।तथा च तदारोप स्तस्यापह्नव इति लक्षणम् । निषेधस्य च न स्वाधिकरणे प्रतियोग्या पार्थत्वसम्भवो न वा स्वाधिकरणे स्वारोप इत्यर्थसिद्धमेवारोपस्या धिकरणत्वमन्यत्रेत्यनेनोक्तम् । अत एव पर्यस्तापह्नुतिरित्युच्यते । पर्य आरोपविपरीता आरोपव्यधिकरणेति तदर्थात् । न च चन्द्रे चन्द्र निषेधस्य कथं मुखे तदारोपार्थत्वमिति वाच्यम् । आरोपदार्ढ्यस दकत्वेन निषेधस्य तदर्थतया अनुभवसिद्धत्वात् । अतएव ह रोपरूपकमेवेदं नापह्नुतिरिति प्राचां सिद्धान्तस्तदनुसारेणैव चित्रमीमांसायां "प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्" इ पह्नुतिलक्षणमुक्तम् । इह त्वलङ्कारत्नाकराद्यनुसारेणायं प्र उपदर्शितसामान्यलक्षणाभिप्रायेणापह्नुतित्वेनोक्त इति निरवद्यम् हालाहल इति । हालाहलो विषं नैव भवति किन्तु रमा लक्ष्मी विषम् । जनाः परं केवलमत्रास्मिन्विषये व्यत्ययं वैपरीत्यं मन्वते अ पगच्छन्ति । कुतस्तत्राह । यस्माच्छिवस्तं हालाहलं निपीय सु जागर्ति । हरिस्तु इमां रमां स्पृशन्सन् निद्रया मुह्यति । स्मरति पाठे स्मरन्नपि मुह्यति । किमु स्पृशन्नित्यर्थः । तथा च रमाया विष पत्वे मोहजनकत्वं हेतुः । हालाहलस्य तत्त्वापह्नवे च जागरसुखप्रयो कत्वमिति बोध्यम् । 'हालाहलो विषे' इति विश्वः । अत्र स्पृशन्मु तीति कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तिरलङ्कारः ।

हेतूक्तिः । ततश्चेति । हेतूक्तितदनुक्तिरूपभेदादित्यर्थः । पूर्वापह्नुति-वच्छुद्धापह्नुतिवद्द्वैविध्यं शुद्धपर्यस्तापह्नुतिर्हेतुपर्यस्तापह्नुतिरित्येवं द्वि-प्रकारत्त्वम् ॥ २७ ॥

(चन्द्रा०)–भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे।
तापं करोति सोत्कम्पं ज्वरः किं न सखि स्मरः॥२८॥

(कुव० )–अत्र तापं करोतीति स्मरवृत्तान्ते कथिते तस्य ज्वरसाधारण्यादृजुबुद्ध्या सख्या ज्वरः किमिति पृष्टे न सखि स्मर इति तत्त्वोक्त्या भ्रान्तिवारणं कृतम् ।

यथा वा–

नागरिक समधिकोन्नतिरिह महिषः कोऽयमुभयतः पुच्छः।
नहिनहि करिकलभोऽयं शुण्डादण्डोऽयमस्य न तु पुच्छम्॥

इदं सम्भवद्भ्रान्तिपूर्विकायां भ्रान्तापह्नुतावुदाहरणम् ॥

कल्पितभ्रान्तिपूर्वा यथा–

जटा नेयं वेणीकृतकचकलापो न गरलं
गले कस्तूरीयं शिरसि शशिरेखा न कुसुमम् ।
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा
पुरारातिभ्रान्त्या कुसुमशर किं मां प्रहरसि ॥

अत्र कल्पितभ्रान्तिर्जटा नेयमित्यादिनिषेधमात्रोन्नेया पूर्वप्रश्नाभावात् । दण्डी त्वत्र तत्त्वाख्यानोपमेत्युपमा-भेदं मेने ।

यदाह–न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।
इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमा मता ॥ इति ॥२८॥

(अ०चन्द्रि०)–भ्रान्तापह्नुतिरिति ॥ अन्यस्य प्रकृतस्य भ्रान्तिवारणे वार्यतेऽनेनेति वारणम्, तथा च भ्रान्तिवारके तत्त्वाख्याने सतीत्यर्थः । भ्रान्तं भ्रमः । भावे क्तः । भ्रान्त्यपह्नुतिरित्यर्थः । एवं च तत्त्वकथनहेतुकभ्रान्तिविषयनिषेधो भ्रान्तापह्नुतिरिति लक्षणं बोध्यम् । तस्य तापकारित्वरूपस्मरवृत्तान्तस्य ॥ नागरिकेति । नगरे भवो नागरिकस्तं प्रति ग्रामीणस्य प्रश्नः । समधिका पश्वन्तरेभ्य उन्नतिरुच्चता यस्यै भूत उभ-

यतो मुखपृष्ठभागयोः पुच्छं यस्यैवंभूतश्च कोयं महिष इति । नहि
रयुत्तरम् । महिष इत्यनुषज्यते । अयं करिकलभः करिशावकः ।
लभः करिशावकः' इति कोशात्कलभ इत्येतावतैव सिद्धे करिप
त्कृष्टकरिबोधार्थम् । अयमस्य शुण्डादण्डो न तु पुच्छमिति ।
इति पाठोऽप्यर्द्धर्चादित्वात्साधुरेव । अप्रयुक्तत्वं तु तत्र परं विचार्य
पूर्वोदाहरणे सन्देहरूपभ्रान्तिविषयज्वरत्वापह्नवः । ज्वरः किं
प्रश्नेन तद्विषयसन्देहावगमात् । इह तु महिषत्वनिश्चयरूपभ्रान्ति
यस्य महिषत्त्वस्येति ततो भेदः । जटेति विरहिण्या इयमुक्तिः । हे
मशर पुरारातेर्हरस्य भ्रान्त्या मां किं कुतः प्रहरसि पीडयसि ।
नेयं जटा किन्तु वेणीकृतोऽवेणी वेणी सम्पद्यते तथा कृतः कच
कलापः तथा गले गरलं नैतदपि त्वियं कस्तूरी एवं शिरसि
शशिलेखा किन्तु कुसुमम् । तथा इयमङ्गे भूतिर्भस्म न भवति पर
प्रियविरहाज्जन्म यस्यैवंभूतो धवलिमा पाण्डिमेति । "अवर्ज्यो बहु
व्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः" इति वामनसूत्राद्व्यधिकरणोऽपि
व्रीहिर्न दुष्टः । कलिपतेति । कुसुमशरे उत्प्रेक्षितेत्यर्थः ॥ निषेधमात्रे
येति । निषेधस्य प्रसक्तिपूर्वकत्वादिति भावः । मेने इत्यस्वरसोद्भा
नम् । तद्बीजं तूपमाबोधकस्येवादेरसत्त्वेऽपि तदुपगमे रूपकस्याप
मात्वं स्यादिति स्पष्टमेव ॥ २८ ॥

**(चन्द्रालो०)–छेकापह्नुतिरन्यस्य शङ्कातस्तथ्यनिह्नवे**
**प्रजल्पन्मत्पदे लग्नः कान्तः किं न हि नूपुरः ॥२९**

**(कुवल०)–कस्यचित्कञ्चित्प्रति रहस्योक्तावन्येन श्रुताय**
**मुक्तेस्तात्पर्यान्तरवर्णनेन तथ्यनिह्नवे छेकापह्नुतिः । य**
**नायिकया नर्मसखीं प्रति प्रजल्पन्मत्पदे लग्न इति स्वन**
**यकवृत्तान्ते निगद्यमाने तदाकर्ण्य कान्तः किमिति शं**
**तवतीमन्यां प्रति नूपुर इति निह्नवः ।**

**सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् ।**
**नागरिकः किं मिलितो नहिनहि सखि हैमनः पवनः ॥**
**इदमर्थयोजनया तथ्यनिह्नवे उदाहरणम् ।**

---

१ "अर्धर्चाः पुंसि च" इत्यनेन पुंस्त्वस्य नपुंसकत्वस्यापि चानुशासनात्पुच्छः इ
पुँल्लिंगपाठेऽपि न लिङ्गहानेरिति न भ्रान्तिशङ्का ॥

शब्दयोजनया यथा–

पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले
नीले मुह्यति किं करोमि महितैः क्रीतोऽस्मि ते विभ्रमैः ।
इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो राधया
कृष्णस्तत्परमेव तद्व्यपदिशन्क्रीडाविटः पातु वः ॥

सर्वमिदं विषयान्तरयोजने उदाहरणम् । विषयैक्येऽप्यवस्थाभेदेन योजने यथा–

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया ।
पतिं बुद्ध्वा सखि ततः प्रबुद्धास्मीत्यपूरयत ॥ २९ ॥

०चन्द्रि० ) छेकापह्नुतिरिति । छेको विदग्धस्तत्कृताऽपह्नुतिरिति लक्ष्यनिर्देशो वाक्यान्यथायोजनहेतुकः शङ्कितताक्त्विकवस्तुनिषेध इति लक्षणम् । अन्यस्य शङ्कात इत्यन्यशंकाया निवर्तनीयत्वेन हेतुतया व्यपदेशः । सन्तापात्स्नातीतिवत् । अत्र च शुद्धापह्नुतिवारणायाद्यं विशेषणम् । 'मम किल श्रुतिमाह तदर्थिकाम्' इत्यधिकताद्रूप्यरूपकवारणाय–शङ्कितेति ॥ न चानेनैव शुद्धापह्नुतिवारणाद्वाक्येत्यादि व्यर्थमिति वाच्यम् । "कस्य वा न भवेद्रोषः प्रियायाः सव्रणेऽधरे । सभृङ्गं पद्ममाघ्रासीर्वारितापि मयाधुना ॥" इति व्याजोक्तावतिप्रसङ्गवारकत्वेन तत्सार्थक्यात् । यद्वक्ष्यति । छेकापह्नुतेरस्याश्चायं विशेषो यत्तस्यां वचनस्यान्यथानयने नापह्नवः । अस्यामाकारस्य हेत्वन्तरवर्णनेन गोपनमिति तथ्यनिह्नवे इति तात्त्विकनिषेध इत्यर्थः । नूपुरो मञ्जीरः । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । नर्मसखी क्रीडासखी । अत्र कान्तपरायाः 'प्रजल्पन्मत्पदे लग्नः' इत्युक्ते नूपुरतात्पर्यकत्ववर्णनेन कान्तत्वापह्नवो मुख्यो नूपुराभेदप्रतिपत्तिस्तु तदङ्गमिति बोध्यम् ॥ सीत्कारमिति । सीत्कारं तदनुकारिमुखध्वनिं शिक्षयति अधरमधरोष्ठं व्रणयति व्रणोस्यास्तीति व्रणी व्रणिनं करोतीत्यर्थे "तत्करोति तदाचष्टे" इति णिच् । तथा रोमाञ्चं तनोति विस्तारयतीति वाक्यत्रयं नागरिकाभिप्रायेण प्रियसखीं प्रति कयाऽप्युक्तं तदाकर्ण्य नागरिकः किं मिलित इति शङ्कितवतीमन्यां प्रति तच्छङ्कानिवृत्तये नहीत्यादिना हैमन्तिकपवनपरत्ववर्णनेन तात्त्विकस्य नागरिकस्यापह्नवः । सीत्कारशिक्षादिकर्तृत्वस्य नागरिक इव वनेऽपि सत्त्वात् । तदाह–अर्थयोजनयेति ॥ विवक्षिताविवक्षितसाधारणस्यार्थस्याविवक्षितार्थसम्बन्धित्ववर्णनयेत्यर्थः । इदमित्युदाहरणमिति च जात्यभिप्रायेणैकवचनम् । हेमन्तशब्दात्

"तत्र भवः" इत्यर्थे "सर्वत्राण् च तलोपश्च" इत्यणि तलोपे च
इति रूपसिद्धिः । प्रजल्पन्नित्युदाहरणे एकस्य वाक्यस्यान्यथा
मिह त्वनेकेषामिति भेदः ॥ शब्दयोजनयेति । अर्थभेदेपि श
षमात्रेणेत्यर्थः ॥ पद्मे इति । क्रीडाया विटो भोक्ता कृ
युष्मान् पातु रक्षत्विति सम्बन्धः । कीदृशः । इत्युत्स्व
स्वप्ने उद्गतमुत्स्वप्नं वचनमर्थात्कृष्णस्यानुभाष्यानूद्य
निर्भर्त्सितः संस्तद्वचनं तत्परमेव राधापरमेव व्यपदिश
यन् । इति किम् । हे पद्मे रमे त्वन्नयने सततं स्मरामि
भवत्याः कुन्तले केशपाशे मम भावोन्तःकरणवृत्तिरूपः मुह्यति
प्राप्नोति । ननु चित्तासङ्गो निर्वर्त्यतां तत्राह–किंकरोमि अकिं
रोस्मि यतस्ते तव महितैः पूज्यैर्विभ्रमैर्विलासैः क्रीतोस्मि मूल्येन
तोऽस्मीति । किङ्करोस्मीति क्वचित्पाठो युक्ततरः । तत्र चास्मी
र्थकमव्ययम् । अहं किङ्करो दासः क्रीतोस्मीत्यर्थः । राधापरत्वे तु
इत्यर्थात्सम्बोधनम् । पद्मरूपे त्वन्नयने स्मरामीति विशेषः । शे
वत । अत्र रमासम्बोध्यकस्तन्नयनस्मरणरूपो न वाक्यार्थोऽपि तु
म्बोध्यकः । पद्मरूपत्वन्नयनस्मरणरूप इत्यपह्नवस्तत्परमेव तद्व
शन्नित्यनेन प्रकाश्यते । न चात्रार्थस्य रमाराधासाधारणत्वमपि
इति लिङ्गवचनश्लिष्टशब्दयोजने वेति ॥ विषयान्तरेति । विव
षयभिन्नेत्यर्थः । अवस्था जाग्रत्स्वप्नादिरूपा ॥ वदन्तीति । पत्यौ
सखीधिया सखीभ्रमेण जारवृत्तान्तं स्वकामुकवार्तां वदन्ती
काचित्पतिं बुद्ध्वा सखीत्यादिवाक्यशेषमपूरयत्पूरितवती ।
पुनः सम्बोधनमप्रतार्यतासूचनाय । तत उक्तवृत्तान्तानन्तरं
जागरणवती । अत्र नासौ जाग्रदवस्थावृत्तान्तः किन्तु स्वाप्निक
स्थाभेदयोजनयापह्नवः सखीत्यादिवाक्यशेषेण प्रकाश्यते ॥ २९ ॥

**(चन्द्रालो०)-कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः**
**निर्यान्ति स्मरनाराचाःकान्तादृक्पातकैतवात्॥**

**( कुवल० )–अत्रासत्यत्वाभिधायिना कैतवपदेन नेमे का**
**कटाक्षाः किं तु स्मरनाराचा इत्यपह्नवः प्रतीयते ॥**

**रिक्तेषु वारिकथया विपिनोदरेषु**
**मध्याह्नजृंभितमहातपतापतप्ताः ।**
**स्कन्धान्तरोत्थितदवाग्निशिखाच्छलेन**
**जिह्वां प्रसार्य तरवो जलमर्थयन्ते ॥ ३० ॥**

चं०)-कैतवापह्नुतिरिति लक्ष्यनिर्देशः ।व्याजाद्यैःपदैर्निह्नुतेर्व्यक्तौ अभि
व्यक्तौ सत्यां कैतवापह्नुतिरिति व्यवहर्तव्यमित्यर्थः । कैतवेनापह्नुतिरिति
व्युत्पत्तेः । व्याजाद्यैरित्यनेन मिषकपटच्छलच्छद्मकैतवादयो गृह्यन्ते ।
वश्च कैतवादिपदव्यङ्ग्यापह्नुतित्वं लक्षणं बोध्यम् । नाराचा बाणाः ।
कपाताः कटाक्षाः । अपह्नवो निषेधः ॥ प्रतीयत इति । असत्यत्वस्य
षयबाधाधीनत्वादिति भावः ॥ रिक्तेष्विति । ग्रीष्मवर्णनम् । तरवो
क्षा वारिणो जलस्य कथया वार्तयापि रिक्तेषु शून्येषु विपिनस्यारण्य-
योदरेषु मध्यमप्रदेशेषु जलमर्थयन्ते प्रार्थयन्ते । कीदृशाः । मध्याह्ने
म्भितः प्रवृद्धो यो महानातप उष्णं तस्य तापस्तपनं तेन तप्ताः सन्त-
ाः । किं कृत्वा । स्कन्धान्तरात्प्रकाण्डाभ्यन्तरादुत्थितो यो दवाग्नि-
वानलस्तस्य या शिखा ज्वाला तस्याः छलेन जिह्वां प्रसार्येति।'अस्त्री
काण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ।' इत्यमरः । अत्र नेयं
वाग्निशिखा अपि तु जिह्वेति छलपदात्प्रतीयते अत्र । चानभिहितवा-
यतादोषनिरासाय कथयापि वनोदरेष्विति पठनीयम् ॥ ३० ॥
लङ्कारचन्द्रिकायां कुवलयानंदटीकायामपह्नुत्यलङ्कारप्रकरणम् ॥ ११ ॥

---

## उत्प्रेक्षालङ्कारः १२

न्द्रा०)-सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना ।
उक्तानुक्तास्पदाद्यात्र सिद्धाऽसिद्धास्पदे परे ॥ ३१ ॥
धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम् ।
लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ॥ ३२ ॥
रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद् ध्रुवम् ।
त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी ॥ ३३ ॥
मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः ।
प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति ॥ ३४ ॥

कुवल० )-अन्यधर्मसम्बन्धनिमित्तेनान्यस्यान्यतादात्म्यस-
म्भावनमुत्प्रेक्षा । सा वस्तुहेतुफलात्मतागोचरत्वेन त्रि-
विधा । अत्र वस्तुनः कस्यचिद्वस्त्वन्तरतादात्म्यसम्भा-
वना प्रथमा स्वरूपोत्प्रेक्षेत्युच्यते । अहेतोर्हेतुभावेनाफलस्य
फलत्वेनोत्प्रेक्षा हेतूत्प्रेक्षा फलोत्प्रेक्षेत्युच्यते । अत्र आद्या

स्वरूपोत्प्रेक्षा उक्तविषयाऽनुक्तविषया चेति द्विविध
हेतु फलोत्प्रेक्षे सिद्धविषयाऽसिद्धविषया चेति प्रत्ये
विधे। एवं षण्णामुत्प्रेक्षाणां धूमस्तोमेत्यादीनि क्रमे
हरणानि। रजनीमुखे सर्वत्र विसृत्वरस्य तमसो नैल
प्रतिरोधकत्वादिधर्मसम्बन्धेन गम्यमानेन निमित्ते
प्रियविघटितसर्वदेशस्थितकोकाङ्गनाहृदुपगतप्रज्वा
द्विरहाऽनलधूमस्तोमतादात्म्यसम्भावना स्वरू
तमसो विषयस्योपादानादुक्तविषया। तमोव्या
नभःप्रभृतिभूपर्यन्तसकलवस्तुसान्द्रमलिनीकरणेन
त्तेन तमःकर्तृकलेपनतादात्म्योत्प्रेक्षा। नभःकर्तृ
वर्षणतादात्म्योत्प्रेक्षा चानुक्तविषया स्वरूपोत्प्रेक्षा
यत्रापि विषयभूततमोव्यापनस्यानुपादानात्।
तमसो व्यापनेन निमित्तेन लेपनकर्तृतादात्म्यं
नभसो भूपर्यन्तं गाढनीलिमव्याप्तत्वेन निमित्तेना
णकर्तृतादात्म्योत्प्रेक्षा चेत्युत्प्रेक्षाद्वयमुक्तविषयमे
मैवम्, लिम्पति वर्षतीत्याख्यातयोः कर्तृवाचकत्वेपि
प्रधानमाख्यातम्' इति स्मृतेर्धात्वर्थक्रियाया एव
न्येन तदुपसर्जनत्वेनान्वितस्य कर्तुरुत्प्रेक्षणीयतया
त्रान्वयासम्भवात्। अत एव आख्यातार्थस्य
क्रियोपसर्जनत्वेनान्यत्रान्वयासम्भवादेव अस्योपम
पमानतयान्वयोऽपि दण्डिना निराकृतः।

(अ०चं०)-उत्प्रेक्षां लक्षयति-सम्भावनेति॥ अत्रोत्प्रेक्षेत्यनन्तरं सा
त्यध्याहार्यम्। तथा च सम्भावना उत्प्रेक्षापदवाच्या स्यात्सा
हेतुफलरूपेण त्रिधेत्यर्थः। वस्तुहेतुफलानां च सम्भावनाधर्म
धेयकत्वसम्बन्धेन। तेन वस्तुहेतुफलविधेयकत्वेनेति पर्यवसि
वस्तु त्वं च हेतुत्वेन फलत्वेन वा विवक्षितं यत्तद्भिन्नत्वम्। ना
त्वस्य केवलान्वयितया विभागसङ्गतिः॥ उक्तेत्यादि। अत्र
त्प्रेक्षाणां मध्ये आद्या वस्तूत्प्रेक्षा। उक्तं चानुक्तं चोक्तानुक्ते
यस्या इति विग्रहः। आस्पदं चोत्प्रेक्षाया धर्मिरूपो विषयः।

द्रित्यत्र विग्रहः पूर्ववत् ॥ धूमेति । तमः कोकीविरहशुष्मणां धूम-
मं शङ्के इत्यन्वयः । कोकस्य चक्रवाकस्य स्त्री कोकी तस्या विर-
पाणां शुष्मणामग्नीनां सम्बन्धिनं धूमसमूहमित्यर्थः ॥ लिम्पतीवेति ।
तम इति नभ इति च कर्तृपदम् । रक्तावित्यादि दयितां प्रति
यकस्योक्तिः । तव मृदुलौ सुकुमारावंघ्री चरणौ ध्रुवं भुवि विक्षेप-
द्धेतो रक्तवर्णाविति ॥ त्वन्मुखेति । पद्मगतायास्त्वन्मुखकान्तेरिच्छ-
हेतुनेत्यर्थः ॥ वैरायत इति । वैरं करोतीत्यर्थे "शब्दवैरकलहाभ्र-
ण्वमेघेभ्यः करणे" इति क्यङ् ॥ मध्य इति । मध्यभागः कुचयो-
र्ये धारणार्थं कनकस्य दामभी रज्जुभिरिति निगीर्याध्यवसानरूपा-
शयोक्त्या बलिभिर्बद्धः किमित्यर्थः ॥ प्राय इति । अब्जं कर्तृ । प्रायो
धा त्वच्चरणेन सहैक्यं प्राप्तुं तोये जले तपस्यति तपश्चरतीत्यर्थः ।
कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इति क्यङ् । "तपसः परस्मै-
ई च" इति परस्मैपदम् । लक्षणं परिष्कुरुते-अन्यधर्मेति ॥ अन्यस्य
षयिणो यो धर्मस्तत्सम्बन्धरूपेण निमित्तेनान्यस्यान्यविषयकम-
स्य विषयिणस्तादात्म्येन सम्भावनमित्यर्थः । अन्यस्येति षष्ठ्यर्थो
षयता धर्मितारूपा । विषयिण इति षष्ठ्यर्थस्तु विशेषणतारूपा
षयता । अन्यत्वेनोत्कीर्तनं च सम्भावनाया आहार्यतासूचनाय । तथा
विषयिनिष्ठधर्मसम्बन्धप्रयुक्तं विषयधर्मिकं तादात्म्यसंसर्गेण विषयि-
धेयकमाहार्यसम्भावनमुत्प्रेक्षेति पर्यवसितम् । तन्निष्ठधर्मसम्बन्धप्रयु-
साहार्यतत्सम्भावनमिति तु निष्कर्षः । इतरांशस्य व्यावर्तकतया
वरूपकथनमात्रपरत्वात् । मुखं चन्द्रं मन्य इत्युत्प्रेक्षायां चन्द्रनि-
ह्लादकत्वादिधर्मसम्बन्धप्रयुक्तं मुखे चन्द्रसम्भावनमाहार्यमस्तीति
क्षणसमन्वयः । बाधाद्यभावदशायां तु जायमाना मुखादौ चन्द्रा-
द्सम्भावनोत्प्रेक्षेति तद्वारणायाहार्येति । एतेन "विरक्तसन्ध्यापरुषं
रस्ताद्यथा रजः पार्थिवमुज्जिहीते । शंके हनूमत्कथितप्रवृत्तिः प्रत्यु-
तो मां भरतः ससैन्यः ॥" इत्यत्र रजोभरोद्गमनरूपससैन्यप्रत्युद्गन्तृ-
र्मसम्बन्धप्रयुक्तायां भरते तत्सम्भावनायामपि नातिव्याप्तिः तस्या
नाहार्यत्वात् "सम्भावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ।" इति
वक्ष्यमाणसम्भावनालंकारविषये "यदि शेषो भवेद्वक्ता कथिताः स्युर्गु-
णास्तव ।" इत्यादावतिव्याप्तिवारणाय प्रयुक्तान्तम् । "सर्वातिशायि-
सौन्दर्यं शंके सत्यवतो मुखम् । येन सा मृगशावाक्षी सावित्री तरली-
कृता ॥" इत्यादावतिप्रसङ्गवारणाय तन्निष्ठेति सम्भाव्यमानवृत्तित्वं धर्म-
विशेषणम् । तत्र सावित्रीतरलीकारकत्वरूपो धर्मो मुखवृत्तिर्न तु सम्भा-
व्यमानवृत्तिरिति नातिप्रसङ्ग इति दिक् । वस्तुहेतुफलात्मता

वस्तुहेतुफलतादात्म्यम् । ननु संबन्धान्तरेणोत्प्रेक्षाया
इति चेन्न, सर्वत्राभेदेनैवोत्प्रेक्षणमिति प्राचीनमतानुसारेणेत्थमी
नादेतत्सूचनायैव लक्षणेऽत्र च तादात्म्योपादानमिति ॥ नन्व
सर्वस्वकारादिभिः स्वरूपोत्प्रेक्षेति व्यवहृतायास्तुरीयाया अपि
त्त्रिविधेत्ययुक्तमित्याशङ्क्याह–अत्रेति । आसां मध्ये या प्रथमा
त्प्रेक्षा सैव स्वरूपोत्प्रेक्षेत्युच्यत इत्यर्थः ॥ विस्त्वरस्येति । प्रसर
लस्येत्यर्थः । तमस इति सम्भावनेत्यनेनान्वेति । षष्ठ्यर्थो विषयता
विषयेत्यर्थः । प्रतिरोधकत्वादीत्यादिपदात्प्रसरणशीलत्वस्य स
प्रियैः पतिभिर्विघटिता वियुक्ताः । व्यापनस्येति षष्ठ्यन्तस्य पूर्व
क्षापदेनान्वयः । एवमग्रेतनस्य तमस इत्यस्यापि ॥ अनुपादानाि
विषयिवाचकाभ्यां लिम्पतिवर्षतिभ्यामन्येनानुपादानादित्यर्थः ।
श्रुते ताभ्यामेव साध्यावसानलक्षणयोपादानादसङ्गतेः ॥ उक्तविष
ति । सकृदुच्चारिताभ्यां लिम्पतिवर्षतिभ्यां शक्त्या लेपनवर्षणयो
ध्यावसानलक्षणया च साधारणधर्मपुरस्कारेण व्यापनस्य चोपस्थ
स्य युगपद्वृत्तिद्वयविरोधेनासम्भवादित्याशयः । स्मृतेर्निरुक्तस्मृतेः
क्षणीयतया उत्प्रेक्षाविषयतया, अन्यत्रोत्प्रेक्षायाम् ॥ अन्वयासम्
दिति । निराकांक्षत्वादिति भावः । अत एवाख्यातार्थस्य कर्तुः क्रि
सर्जनत्वेनान्यत्रान्वयासम्भवादेव क्वचिदत एवेत्युत्तरमयमेव व्या
ग्रन्थः प्रमादलिखितो दृश्यते ॥

( कुव० )–"[1]कर्त्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रिया
स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम् ॥" इ

केचित्तु तमोनभसोर्विषयस्तत्कर्तृकलेपनवर्षणस्वर
मोत्प्रेक्षेत्याहुः । तन्मते स्वरूपोत्प्रेक्षायां धर्म्युत्प्रेक्षा
त्प्रेक्षा चेत्येवं द्वैविध्यं द्रष्टव्यम् । चरणयोः स्वतः
रक्तिमनि वस्तुतो विक्षेपणं न हेतुरित्यहेतोस्तस्य हे
सम्भावना हेतूत्प्रेक्षा विक्षेपणस्य विषयस्य सत्त्वात्
विषया । चन्द्रपद्मविरोधे स्वाभाविके नायिकावदनका
प्रेप्सा न हेतुरिति तत्र तद्धेतुत्वसम्भावना हेतूत्प्रेक्षा । व
तस्तदिच्छाया अभावादसिद्धविषया । मध्यः स्वय
कुचौ धराति न तु कनकदामबन्धत्वेनाध्यवसिताया व

१ अयं श्लोकः प्राचीनपुस्तकद्वये नोपलभ्यते, अन्येष्वस्ति ।

श्रयशालितायाः बलात् इति मध्यकर्तृककुचधृतेस्तत्फलत्वेनोत्प्रेक्षा सिद्धविषया फलोत्प्रेक्षा। जलजस्य जलावस्थितेरुदवासतपस्त्वेनाध्यवसितायाः कामिनीचरणसायुज्यप्राप्तिर्न फलमिति तस्या गगनकुसुमायमानायास्तपःफलत्वेनोत्प्रेक्षणादसिद्धविषया फलोत्प्रेक्षा। अनेनैव क्रमेणोदाहरणान्तराणि—

बालेन्दुवक्राण्यविकासभावा-
बभुः पलाशान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम्॥

अत्र पलाशकुसुमानां वक्रत्वलोहितत्वेन सम्बन्धेन निमित्तेन सद्यःकृतनखक्षततादात्म्यसम्भावना उक्तविषया स्वरूपोत्प्रेक्षा॥

(अ०चं०)—न्यग्भूतेति। गुणभूत इत्यर्थः॥ स्वक्रियेति। क्रियां प्रति साधनत्वेनान्वित इत्यर्थः। व्यपेक्षितुमाकांक्षितुं नालं न समर्थः। तथा च निराकांक्षत्वादुपमानत्वेनान्वयो न सम्भवतीति भावः। एतेन तमसि लेपनकर्तृत्वमुत्प्रेक्ष्यमित्यलङ्कारसर्वस्वकारमतमपास्तम्। तस्यापि कर्तृविशेषणत्वाद्विवक्षितविवेकेन लेपनस्यैवोत्प्रेक्ष्यत्वाच्च। एवं च प्रधानभूतलेपनक्रियागोचराभावनैव निगीर्णव्यापनविषयेति सिद्धम्। केचिदिति न च युगपद् वृत्तिद्वयविरोधः शङ्क्यस्तदनभ्युपगमात्॥ केचिदिति मत इति चास्वरसोद्भावनम्। तद्बीजं तु तमोनभसोः कर्तृत्वेन विषयत्वेन च वारद्वयमन्वयक्लेशः। तथा धर्म्युत्प्रेक्षा सा धर्मप्रयुक्ता। धर्मोत्प्रेक्षा तु तत्सहचरितधर्मसम्बन्धप्रयुक्तेति लक्षणानुगमः। न च तन्निष्ठतत्समानाधिकरणान्यतरत्वेन धर्मनिवेशान्नाननुगम इति वाच्यम्, सर्वत्र सादृश्यनिमित्ताया एवोत्प्रेक्षायाः सम्भवेनान्यतरत्वादिनिवेशप्रयुक्तगौरवस्यानुपादेयत्वादिति॥ हेतुत्वेनेति। हेतुरूपतयेत्यर्थः। हेतुसम्भावनाहेतुरूपतासम्भावना फलत्वेन फलरूपतया। एवमग्रेऽपि बोध्यम्॥ अथोदाहृतासूत्प्रेक्षासु बोधप्रकारः प्रदर्श्यते। तत्र धूमस्तोममित्यादौ कोकाङ्गनाविरहानलसम्बन्धिधूमस्तोमाभिन्नतमोविषया सम्भावनेति बोधः, नामार्थयोरभेदान्वयात्। एवं 'मुखं चन्द्रं मन्ये' इत्यादावपि। नूनं मुखं चन्द्र इत्यादौ तु चन्द्रप्रकारकसम्भावनावि-

षयो मुखमिति बोधः । मुखविषया चन्द्रप्रकारिका च सम्भा
तादात्म्यसंसर्गिकैव तथानुभवाच्चमत्कारप्रयोजकस्य संसर्गान्तरा
भावाच्च । न चैवं चन्द्रत्वप्रकारिका तस्य चन्द्रोपसर्जनत्वात् ।
ध्रुवेवादिशब्दसमभिव्याहारेऽपि बोध्यम् । लिम्पतीवेत्यनुक्तविषयो
क्षोदाहरणे तु लिम्पतिना साध्यवसानलक्षणया लेपनव्यापनोभया
धारणेन सान्द्रमलिनीकारकत्वादिना रूपेणोपस्थापिते तमोव्या
लेपनसम्भावनान्वयात्सान्द्रमलिनीकारकतमःकर्तृकाङ्गकर्मकलेपनप्र
कारकसम्भावनाविषय इति बोधः । व्यञ्जनयोपस्थिते व्यापने ता
सम्भावनान्वय इति प्रदीपकृतः । एवं वर्षतीत्यादावपि बोध्य
विक्षेपणाद् ध्रुवमित्यादिहेतूत्प्रेक्षोदाहरणे हेतुः पञ्चम्यर्थः । तत्र चाभे
प्रकृत्यर्थान्वयः, हेतोश्च स्वप्रयोज्याश्रयत्वसम्बन्धेन रक्तत्वविशिष्टे, त
प्रकारतासम्बन्धेन सम्भावनायां, तस्याश्च विषयतया चरणयोरन्व
तथा च भूम्यधिकरणकविक्षेपणाभिन्नहेतुकरक्तप्रकारकसम्भावना
षयावङ्घ्री इति बोधः । न च तादात्म्यसम्बन्धेन हेतुविधेयकत्वा
वान्नेयं हेतूत्प्रेक्षा स्यात्किं तु तादात्म्येन तथाविधरक्तस्वरूपोत्प्रेक्षै
वाच्यम्, विवक्षितविवेकेन विक्षेपणे हेत्वभेदस्योत्प्रेक्षणीयतया वि
पणं प्रति विशेष्यभूतस्यापि हेतोर्विधेयत्वोपगमात् । मुखं चन्द्र इ
दिरूपक इवानुयोगित्वमुखस्याभेदस्य विक्षेपणसंसर्गत्वाभ्युपगमेन
विक्षेपणे हेत्वभेदभानसम्भवात् । हेतुविशिष्टस्वरूपोत्प्रेक्षाया मु
प्रतीतावपि विवक्षावशेन हेतूत्प्रेक्षात्वेनैव व्यपदेशः । यथा "द
जुहोति " इत्यत्र मुखतो दधिविशिष्टहोमप्रतीतावपि विवक्षितवि
होमे दधिविधित्वव्यपदेश इति बोध्यम् । न च स्वप्रयोज्यत्वसम्ब
स्वप्रयोज्याश्रयत्वसम्बन्धेन वा हेतुरूपधर्मोत्प्रेक्षैव रक्तादौ स्वीक्रि
कृतमीदृशकल्पनाक्लेशेनेति वाच्यम्, धर्मोत्प्रेक्षाङ्गीकारे दूषणस्य प्र
वावेदितत्वात् । अत एव "हर्षाल्लग्ना ( मन्ये ) ललिततनु ते पाद
पद्मलक्ष्मीः" इति हेतूत्प्रेक्षामुदाहृतवतः [1]प्रकाशकृतोऽपि तत्र हर्ष
कलगनतादात्म्यसम्भावनमेव स्वाभाविके लगनेऽभिमतम् । अस्मदु
रीत्या तु लक्ष्मीरूपे विषये यथोक्तहर्षहेतुकलगनतादात्म्यसम्भावन
चितम् । लगनस्य धर्म्युपसर्जनत्वेन सम्भावनायामन्वयायोगादि
ध्येयम् । एवं त्वन्मुखाभेच्छया इत्यसिद्धविषयहेतूत्प्रेक्षायामपि बोध्य
विषयसिद्धत्वासिद्धत्वाभ्यां बोधे विशेषाभावात् । मध्यः किमित
दिफलोत्प्रेक्षास्थले फलं चतुर्थ्यर्थः । तत्र चाभेदेन प्रकृत्यर्थान्वयः
वत् । फलस्य च प्रयोजकत्वसंसर्गेण बद्धत्वे तद्द्वारकेण तेनैव

---

१ प्रकाशकृतः काव्यप्रकाशकृतो मम्मटस्येत्यर्थः ।

मध्ये विषयतया । एवं च वान्वयस्तत्तादात्म्यसंसर्गकसम्भावनाया कुचधरणाभिन्नफलककनकदामकरणकबद्धत्वाश्रयसम्भावनाविषयो मध्य इति बोधः । एवं प्रायोऽब्जमित्यादावपि फलं तुमुनोऽर्थ इति पूर्ववदेव बोधः । फलोत्प्रेक्षात्वं चोपदर्शितरीत्योपपादनीयमिति बहुवक्तव्येऽपि विस्तरभयादुपरम्यते ॥ बालेन्दुवक्राणीति । न विद्यते विकासो येषां तान्यविकासानि तेषां भावाद्विकासरहितत्वाद्धेतोर्बालेन्दुवत् द्वितीयाचन्द्रवद्वक्राणि तथातिशयेन लोहितान्यारक्तानि पलाशानि पलाशकुसुमानि वसन्तेन नायकेन समागमं प्राप्तानां वनस्थलीनामङ्गनानां सद्यस्तत्कालसम्भूतानि नखक्षतानीव बभुः शुशुभिर इत्यन्वयः ॥

कुवल० )—पूर्वोदाहरणे निमित्तभूतधर्मसम्बन्धो गम्य इह तूपात्त इति भेदः । नन्विवशब्दस्य सादृश्यपरत्वेन प्रसिद्धतरत्वादुपमैवास्तु । लिम्पतीवेत्युदाहरणे लेपनकर्तुरुपमानत्वार्हस्य क्रियोपसर्जनत्ववदिह नखक्षतानामन्योपसर्जनत्वस्योपमाबाधकस्याभावात् । उच्यते, उपमाया यत्र क्वचित्स्थितैरपि नखक्षतैः सह वक्तुं शक्यतया वसन्तनायकसमागतवनस्थलीसम्बन्धित्वस्य विशेषणस्यानपेक्षितत्वादिह तदुपादानं पलाशकुसुमानां नखक्षततादात्म्यसम्भावनायामिवशब्दमवस्थापयति । तथात्व एव तद्विशेषणसाफल्यात् । अस्ति च सम्भावनायामिवशब्दो दूरे तिष्ठन्देवदत्त इवाभातीति ॥

पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥

अत्र तरङ्गाग्रैः फेनचन्दनस्य प्रेरणं पेषणतयोत्प्रेक्ष्यते । समुद्रादुत्थितस्य चन्द्रस्य प्रथमं समुद्रपूरे प्रसृतानां कराणां दिक्षु व्यापनं च समुद्रोपान्तफेनचन्दनकृतलेपनत्वेनोत्प्रेक्ष्यते । उभयत्र क्रमेण समुद्रप्रान्तगतफेनचन्दनपुञ्जीभवनं दिशां धवलीकरणं च निमित्तमिति फेनचन्दनप्रेरणकिरणव्यापनयोर्विषययोरनुपादानादनुक्तविषये स्वरूपोत्प्रेक्षे । येषां तूपात्तयोः समुद्रचन्द्रयोरेव तत्कर्तृकपेषणले-

पनरूपधर्मोत्प्रेक्षेति मतम् । तेषां मते पूर्वोदाहरणे धर्मि धर्म्यन्तरतादात्म्योत्प्रेक्षा । इह तु धर्मिणि धर्मसंसर्गो त्प्रेक्षेति भेदोऽवगन्तव्यः ॥

रात्रौ रवेर्दिवा चेन्दोरभावादिव स प्रभुः ।
भूमौ प्रतापयशसी सृष्टवान्सततोदिते ॥

रात्रौ रवेर्दिवा चन्द्रस्याभावः सन्नपि प्रतापयशसोः स न हेतुरिति तस्य तद्धेतुत्वसम्भावनासिद्धविषया हेतूत्प्रेक्षा।

विवस्वताऽनायिषतेव मिश्रा
स्वगोसहस्रेण समं जानानाम् ।
गावोऽपि नेत्रापरनामधेया-
स्तेनेदमान्ध्यं खलु नान्धकारैः ॥

अत्र विवस्वता कृतं स्वकिरणैः सह जनलोचनान नयनमसदेव रात्रावान्ध्यं प्रति हेतुत्वेनोत्प्रेक्ष्यत इत्य सिद्धविषया हेतूत्प्रेक्षा ।

( अ०चं० )-पूर्वेति । धूमस्तोममित्यत्रेत्यर्थः । ननु लोके सम्भावनायामिव शब्दो न दृष्ट इत्यत आह-अस्ति चेति॥ पिनष्टीवेति । समुद्रस्तरङ्गाणाम ग्रभागैः फेनरूपं चन्दनं पिनष्टीव।इन्दुस्तत्फेनचन्दनमादाय करैः किरणै दिग्रूपा अङ्गना लिम्पतीव । अनुलिम्पतीवेत्यर्थः ॥ समुद्रोपान्तेति । समुद्र स्योपान्ते तटे यत्फेनचन्दनं तत्कृतं यत्तासां दिशां लेपनं तत्त्वेनेत्यर्थः उभयत्र उभयोरुत्प्रेक्षयोः । येषामलङ्कारसर्वस्वकारादीनाम्॥ रात्राविति स प्रक्रान्तः प्रभुर्भूपतिः भूमौ रात्रौ रवेरभावाद्धेतोरिव दिवा चेन्दोरभा वाद्धेतोरिव सततं निरन्तरमुदिते प्रतापयशसी सृष्टवान्निर्मितवानि त्यर्थः । रक्तावित्युदाहरणे भावरूपो हेतुरिह त्वभावरूप इति भेदः॥ विवस्वतेति । विवस्वता सूर्येण स्वस्य गोसहस्रेण किरणसहस्रेण सम मिश्रा मिश्रिता जनानां नेत्रापरनामधेया गावोऽप्यनायिषतेव नीता इव। यथा गोपालेन परकीयाभिर्गोभिर्मिश्रा स्वीया गावो नीयन्ते तथा गोपदवाच्यत्वसाजात्येन मिश्रिता विवस्वतापि नीता इवेत्यर्थः । खलु सम्भावनायाम् । तेन नयनेन हेतुना इदमान्ध्यं न त्वन्धकारैरित्यन्वयः। 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्रीसौरभेयीदृग्बाण दिग्वाग्भूष्वप्सु भूम्नि च ॥' इति मेदिनी । अत्र चानायिषतेवेति विषयो त्प्रेक्षणपूर्वकं तस्य हेतुत्वेनोत्प्रेक्षणमिति पूर्वस्माद्भेदः । एवं पूर्वत्र इच्छ-

येति गुणरूपो हेतुरिह तु क्रियारूप इत्यपि द्रष्टव्यम् । अत्र चोत्प्रेक्षाद्वयसत्त्वेपि हेतूत्प्रेक्षायाः प्राधान्यात्तत्त्वेनैव व्यपदेशो न तु स्वरूपोत्प्रेक्षात्वेन । तस्या अङ्गत्वात् । एवमन्यत्रापि बोध्यम् ॥

( कुवल० )–पूरं विधुर्वर्द्धयितुं पयोधेः
शङ्केयमेणाङ्कमणिं कियन्ति ।
पयांसि दोग्धि प्रियविप्रयोगे
सशोककोकीनयने कियन्ति ॥

अत्र चन्द्रेण कृतं समुद्रस्य बृंहणं सदेव तदा तेन कृतस्य चन्द्रकान्तद्रावणस्य कोकाङ्गनाबाष्पस्रावणस्य च फलत्वेनोत्प्रेक्ष्यत इति सिद्धविषया फलोत्प्रेक्षा ।

रथस्थितानां परिवर्तनाय
पुरातनानामिव वाहनानाम् ।
उत्पत्तिभूमौ तुरगोत्तमानां
दिशि प्रतस्थे रविरुत्तरस्याम् ॥

अत्रोत्तरायणस्याश्वपरिवर्तनमसदेव फलत्वेनोत्प्रेक्ष्यत इत्यसिद्धविषया फलोत्प्रेक्षा । एता एवोत्प्रेक्षाः ।

"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोपि तादृशः ॥"

इत्युत्प्रेक्षाव्यञ्जकत्वेन परिगणितानां शब्दानां प्रयोगे वाच्याः । तेषामप्रयोगे गम्योत्प्रेक्षा ।

यथा–त्वत्कीर्तिर्भ्रमणश्रान्ता विवेश स्वर्गनिम्नगाम् ॥

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

( अ०चं० )–पूरमिति । अयं विधुश्चन्द्रः पयोधेः पूरं वर्द्धयितुमेणाङ्कमणिं चन्द्रकान्तं कियन्ति लोकोक्त्या अपरिमितानि पयांसि दोग्धीति शङ्के । तथा प्रियैः पतिभिर्विप्रयोगे वियोगे सति सशोकानां कोकाङ्गनानां नयने । कर्मभूते । कियन्ति पयांसि दोग्धीति शङ्के इत्यन्वयः । दुहेर्द्विकर्मकत्वादेणाङ्कमणिमिति द्वितीया । एवं नयने इत्यत्रापि । मध्यः किमित्यत्रैकस्य वद्धरवस्य फलत्वेन कुचधृतेरुत्प्रेक्षणमिह तु द्रावणस्रावणयोर्द्वयोः फलत्वेन पूरवर्द्धनस्य तदिति भेदः । बृंहणं वर्द्धनं तदा

वर्द्धनकाले तेन चन्द्रेण ॥ रथस्थितानामिति । रविः रथे स्थितानां नियुक्तानां पुरातनानां वाहनानामश्वानां परिवर्तनायेव तुरगोत्तमानामुत्पत्तिभूमौ उत्तरस्यां दिशि प्रतस्थ इत्यन्वयः । श्रायोक्जमित्यत्रैक्यस्य गुणस्य फलत्वेनोत्प्रेक्षणमिह तु परिवर्तनक्रियाया इति भेदः । नन्वलङ्कारसर्वस्वकारादिभिरन्येषामपि जात्यादिभेदानामुक्तत्वात्कुतस्तेन प्रदर्शिता इत्याशङ्क्याह-एता एवेति । उक्तभेदा एवेत्यर्थः । उत्प्रेक्षा इत्यनन्तरं चमत्कारविशेषप्रयोजिका इति शेषः । तथा च जात्यादिभेदानां चमत्कारविशेषानाधायकत्वादप्रदर्शनमिति भावः ॥ इत्युत्प्रेक्षेति । इत्यनेनोत्प्रेक्षाबोधकत्वेनेत्यर्थः ॥ त्वत्कीर्तिरिति । अत्रानुपात्तस्वर्गगमनविषया स्वर्गङ्गाप्रवेशतादात्म्योत्प्रेक्षा । विशेषणीभूतभ्रमणश्रान्तत्वरूपहेतूत्प्रेक्षा वा प्रतीयत इति बोध्यम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामुत्प्रेक्षालङ्कारप्रकरणम् ॥ १२ ॥

---

## अतिशयोक्त्यलंकारः १३.

(चंद्रा०)-रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः ।
पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः ३५ ॥

( कुव० )-विषयस्य स्वशब्देनोल्लेखनं विना विषयिवाचकेनैवशब्देन ग्रहणं विषयनिगरणं तत्पूर्वकं विषयस्य विषयिरूपतयाध्यवसानमाहार्यनिश्चयस्तस्मिन्सति रूपकातिशयोक्तिः । यथा नीलोत्पलशरशब्दाभ्यां लोचनयोः कटाक्षाणां च ग्रहणपूर्वकं तद्रूपताध्यवसानम् ।

यथा वा-वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या
सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली ।
अग्रे शैलौ सुकृतिसुगमौ चन्दनच्छन्नदेशौ
तत्रत्यानां सुलभममृतं सन्निधानात्सुधांशोः ॥

अत्र वाप्यादिशब्दैर्नाभिप्रभृतयो निगीर्णाः । अत्रातिशयोक्तौ रूपकविशेषणं रूपके दर्शितानां विधानामिहापि सम्भवोस्तीत्यतिदेशेन प्रदर्शनार्थम् । तेनात्राप्य-

**भेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति द्वैविध्यं द्रष्ट-
व्यम् । तत्राप्याधिक्यन्यूनताविभागश्चेति सर्वमनुसन्धेयम् ।**

( अ०चं० )-अतिशयोक्तिं लक्षयति-रूपकातिशयोक्तिरिति ॥ ग्रणहमुप-
स्थापनम् ॥ विषयिरूपतयेति । विषयिणो रूपमस्य तस्य भावस्तत्ता
तयेत्यर्थः । रूपं चाभेदताद्रूप्यान्यतरत् ॥ तस्मिन्सतीति । सप्तमीसम-
र्थात्तसिरित्यभिप्रायेण । एवं चानुपात्तविषयधर्मिकाहार्यनिश्चयविषयी-
भूतम् । विषय्यभेदताद्रूप्यान्यतररूपकातिशयोक्तिरिति लक्षणम्बोध्य-
म् ॥ अत्र रूपकवारणायानुपात्तेति । अयमेव च रूपकादस्यां विशेषोऽ
तिशय इत्युच्यते । भ्रान्तिवारणायाहार्येति । उत्प्रेक्षावारणाय निश्च-
येति ॥ नीलोत्पलेति । अत्र नीलोत्पलपदात्साध्यवसानलक्षणया शक्य-
लक्ष्योभयानुगतकान्तिविशेषादिपुरस्कारेणोपस्थिते कामिनीनयने श-
क्त्युपस्थितस्य नीलोत्पलविशिष्टस्याभेदसंसर्गेणान्वयः । शक्त्युपस्थि-
तयोः कृतीष्टसाधनतयोरिव शक्तिलक्षणाभ्यामुपस्थितयोरप्येकपदार्थ-
योस्तात्पर्यवशेनान्वयाङ्गीकारे बाधकाभावात् । एवं च नीलोत्प-
लाभिन्नकान्तिविशेषवद्द्वन्द्वादिति बोधादियमभेदातिशयोक्तिरित्यु-
च्यते । न चैवं सति रूपकादवैलक्षण्यमिति वाच्यम् । रूपके
विषयिभेदव्याप्यस्य विषयतावच्छेदकस्य भानेन वैलक्षण्यस्य
स्फुटत्वात् यदा त्वभेदभाने न तात्पर्यं किं तु भेदभाने तदा कान्तिवि-
शेषादिरूपताद्रूप्यस्यैव बोधात्ताद्रूप्यातिशयोक्तिर्वक्ष्यते इति बोध्यम् ॥
वापीति । मध्यभागमारभ्य मुखपर्यन्तं नायिकाङ्गवर्णनमिदम् । गगने
सूक्ष्मतया तद्वद्दुर्लक्ष्ये मध्ये काप्यनिर्वचनीयशोभा वापी तद्वद्गम्भीरा
नाभिः स्फुरति शोभते तत्परं तदूर्ध्वभागे ऐन्द्रनीली इन्द्रनीलघटिता
सूक्ष्मपद्या सरणिस्तद्वच्छ्यामा रोमावलिः स्फुरतीत्यनुषज्यते । किं-
भूता । काञ्चननिर्मितां सोपानपङ्क्तिं तत्सदृशीं त्रिवलीमधिगतवती
प्राप्तवती तथा अग्रे तदूर्ध्वदेशे शैलौ तद्वत्तुङ्गविशालौ कुचौ स्फुरत इति
विभक्तिविपरिणामेन सम्बध्यते ॥ कीदृशौ । सुकृतिनां पुण्यकृतां सु-
गमौ सुलभगमनौ सुलभौ च । पुनः कीदृशौ । चन्दनतरुभिः चन्दन-
पङ्केन चाच्छन्नौ व्याप्तौ देशौ ययोस्तथाभूतौ । तत्रत्यानां तदाश्लि-
ष्टानां च सुधांशोस्तद्वदाह्लादकस्य मुखस्य सन्निधानादमृतं तद्वदास्वा-
द्यमधरमाधुर्यं सुलभमित्यन्वयः ॥ विधानां भेदानाम् । इतीत्यस्य प्रद-
र्शनार्थमित्यनेनान्वयः ॥ अतिदेशेनेति । सादृश्येनेत्यर्थः । मुख्यरूपका-
भेदस्यातिशयोक्तावभावाद्रूपकपदं रूपकसदृशपरम् । "षण्मासमग्नि-
होत्रं जुह्वति" इत्यत्राग्निहोत्रपदवद्धर्मातिदेशकमित्याशयः । आधिक्य-

न्यूनतेत्यत्रानुभयोक्तेरुक्तोदाहरणेषुप्रसिद्धतरत्वादनुपादानं बोध्यम्
यत्त्वत्र कैश्चिदुक्तं विषयिवाचकपदस्य विषये साध्यवसानलक्षणा
शक्यतावच्छेदकमात्रप्रकारकलक्ष्यविशेष्यकबोधत्वंकार्यतावच्छेदकम्
एवं च निगरणे सर्वत्र विषयतावच्छेदकधर्मरूपेणैव विषयस्य भ
न विषय्यभिन्नत्वेनेति स्थितेऽभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरि
द्वैविध्यमयुक्तमिति, तत्प्रौढिविलसितम् । शक्यतावच्छेदकस्य ल
पूर्वमप्रतीतत्वेन तद्विशिष्टतया लक्षणाया असम्भवात्, यद्धर्मविशि
शक्यसम्बन्धग्रहस्तद्धर्मप्रकारकलक्ष्योपस्थितेः समानप्रकारकशा
बोधे हेतुत्वाल्लक्षणापरिहार्याया अनुपपत्तेस्तदवस्थत्वाच्च । एवम्
तात्पर्यवशात्तादृशबोधाङ्गीकारे तद्वशादेव शक्याभेदप्रकारकबोधे
बाधकाभावान्मात्रपदेन विषयतावच्छेदकस्यैव व्यावर्तनादिति दिक्

**( कुव० ) यथा वा–सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां**
**किरज्ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम् ।**
**उपप्राकाराग्रे प्रहिणु नयने तर्कय मना–**
**गनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥**
**इत्यत्र कोऽयमित्युक्त्या प्रसिद्धचन्द्राद्भेदस्तत उत्कर्षश्च**
**गर्भितः । एवमन्यत्राप्यूहनीयम् ॥ ३५ ॥**

( अ०च० )–सुधाबद्धेति ॥ विद्धशालभञ्जिकाख्यायां नाटिकायां स्फटिक
प्राकारशिखरगतां मृगाङ्कावलीमालोकयतो राज्ञो विदूषकं प्रत्युक्तिरि
यम् । प्राकाराग्रसमीपे नयने प्रहिणु प्रेरय मनाक् ईषत्तर्कय । अनाकाशे
अनन्तरिक्षे कोयं शीतकिरणश्चन्द्र इति मुखे चन्द्रगताह्लादकारित्व
रूपताद्रूप्याध्यवसानम् । कीदृशः । गलितश्च्युतो हरिणो यस्मात्तथा
भूतस्तेन निष्कलङ्कतयोत्कर्षाभिव्यक्तिः । पुनः कीदृक् । सुधायां बद्धो
ग्रासस्तदभिलाषो यैस्तैरुपवनसम्बन्धिभिश्चकोरैरनुसृतां लवल्याः फल
पाकस्य प्रणयिनीं सदृशीमच्छां स्वच्छां ज्योत्स्नां तत्त्वेनाध्यवसितां
कान्तिं प्रभां किरन्प्रसारयन्नित्यर्थः । लवली लताविशेषो 'हरफारेवडी'
इति भाषाप्रसिद्धः । 'प्राकारो वरणः सालः' इत्यमरः । समाबद्धग्रासै
रिति क्वचित्पाठस्तत्राप्युक्त एवार्थः । नवलवलीति पाठे नवश्चासौ लव
लिपाकश्चेत्यन्वयो बोध्यः । नन्विहाभेदविवक्षैव किं न स्यादत आह
अत्रेति ॥ कोऽयमित्यनेनानिर्ज्ञातत्वप्रकाशनात्प्रसिद्धस्यनिर्ज्ञातत्वात्तद्वैल
क्षण्यावगतिरिति भावः।गर्भितो गलितेत्यादिविशेषणव्यङ्ग्यत्वेनाभिप्रेतः॥
अन्यत्रापीति । "अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः कलङ्केना

श्लिष्टो न खलु परिभूतो दिनकृता । कुहूभिर्नो लिप्तो न च युवति-वक्त्रेण विजितः कलानाथः कोऽयं कनकलतिकायामुदयते" इत्यादावि-त्यर्थः । अथवान्यत्रापि न्यूनतायामपीत्यर्थः । कोऽयं भूमिगतश्चन्द्र इत्या-दावदिव्यत्वरूपन्यूनताप्रकाशनमूहनीयमिति भावः । ननूक्तोदाहरणे-ष्वयमिति विषयस्योपादानात्कथमतिशयोक्तिरिति चेदत्राहुः । इदं-त्वस्य विषयिविशेषणत्वेन विवक्षायामतिशयोक्तिरेव । यदा तु विषय-विशेषणत्वविवक्षा तदा रूपकमिति व्यवस्था । अत एव प्रकाशकृता दशमे रूपकातिशयोक्त्यादिसन्देहसंकरे । "नयनानन्ददायीन्दोर्बिम्ब-मेतत्प्रसीदति ॥" इत्युदाहृतमिति ॥ ३५ ॥

( चन्द्रा० )–यद्यपह्नुतिगर्भत्वं सैव सापह्नवा मता ।
त्वत्सूक्तिषु सुधा राजन्भ्रान्ताः पश्यन्ति तां विधौ ३६

( कुवल० )–अत्र त्वत्सूक्तिमाधुर्यमेवामृतमित्यतिशयोक्तिश्च-न्द्रमण्डलस्थममृतं न भवतीत्यपह्नुतिगर्भा ।

यथा वा–

मुक्ताविद्रुममन्तरा मधुरसः पुष्पं परं ध्रूर्वहं
प्रालेयद्युतिमण्डले खलु तयोरेकासिका नार्णवे ।
तच्चोदञ्चति शंखमूर्ध्नि न पुनः पूर्वाचलाभ्यन्तरे
तानीमानि विकल्पयन्ति त इमे येषां न सा दृक्पथे ॥

अत्राधररस एव मधुरस इत्याद्यतिशयोक्तिः पुष्परसो मधुरसो न भवतीत्यपह्नुतिगर्भा ॥ अलङ्कारसर्वस्वकृता स्वरू-पोत्प्रेक्षायां सापह्नवत्वमुदाहृतम् ॥

"गतासु तीरं तिमिघट्टनेन
ससम्भ्रमं पौरविलासिनीषु ।
यत्रोल्लसत्फेनतातिच्छलेन
मुक्ताट्टहासेव विभाति शिप्रा ॥"

इति । ततस्त्वियानत्र भेदः । एतत्तु शुद्धापह्नुतिगर्भम् । यत्र फेनततित्वमपह्नुतं तत्रैवाट्टहासत्वोत्प्रेक्षणादिह तु पर्य-

---

१ अयमेकस्मिन्पुस्तके उपलब्धः श्लोकः ।

स्तापह्नुतिगर्भत्वमिन्दुमण्डलादावपह्नुतस्यामृतादेः त्त्यादिषु निवेशनात् । इदं च पर्यस्तापह्नुतिगर्भत्वमुत्प्रे- यामपि सम्भवति ।

( अ०चं० )-एनां विभजते-यद्यपह्नुतीति ॥ अपह्नुतिगर्भत्वं पर्यस्तापह्नुति- र्भत्वं सैव रूपकातिशयोक्तिरेव । तथा च सापह्नवत्वनिरपह्नवत्वा- द्विविधाऽतिशयोक्तिरिति भावः ॥ मुक्तेति । तान्यनुभवैकवेद्या- मानि वस्तूनि ते इमे जनाः विकल्पयन्ति सदसद्वेति विकल्पविषय- कुर्वन्ति । येषां जनानां सा प्रक्रान्ता सुन्दरी दृक्पथे लोचनमार्गे नास- त्यन्वयः । तादृशसुन्दरीदर्शनशालिनस्तु विकल्पयन्तीति भावः । ता- कानि वस्तूनि तत्राह-मुक्ता मौक्तिकं विद्रुमं प्रवालं चान्तरा अन- र्मध्ये मधुरसः । "अन्तरान्तरेण युक्ते" इति द्वितीया । पुष्पं परं के- धूर्वहं भारवाहकं न तु मधुरसयुक्तम् । तयोः मुक्ताविद्रुमयोः - निश्चितं प्रालेयद्युतिमण्डले चन्द्रमण्डले एकासिका एकस्मिन्नासि- अवस्थितिरैकाधिकरण्यमित्यर्थः । न त्वर्णवे समुद्रे तच्च चन्द्रमण्ड- च शंखस्य मूर्ध्नि मस्तके उदश्चति उदयं प्राप्नोति । न पुनः पूर्वाच- स्योदयगिरेरभ्यन्तरे उदश्चति । अत्र मुक्ताविद्रुममधुरसप्रालेयद्युति- ण्डलशंखशब्दैः क्रमेण दन्ताधरतन्माधुर्यमुखकण्ठा निगीर्णाः । पू- दाहरणे भ्रान्तत्वोक्त्या स्पष्टोऽपह्नवः । इह तु परं धूर्वहमित्युक्त्या - इति भेदः । 'प्रालेयं मिहिका च' इत्यमरः ॥ गतास्विति । पुरे भ- पौर्यस्तासु विलासिनीषु तिमीनां मत्स्यानां संघट्टनेन ससम्भ्रमं स- तीरं प्रति गतासु सतीषु यत्र नगर्यां शिप्रा नदी उल्लसन्तीनां फेन- तीनां छलेन मुक्तः कृतोऽट्टहास उद्धतहास्यं यथा तथाभूतेव विभाति- त्यन्वयः ॥ इतीति । इत्यत्रेत्यर्थः । इन्दुमण्डलादावित्यादिपदात्पुष्प- सादिपरिग्रहः ॥ सूक्त्यादिष्विति । सूक्तिमाधुर्यादिष्वित्यर्थः । आदि- अधरमाधुर्यपरिग्रहः । निवेशनादभेदाध्यवसानात् ।

( कुवल० )-तत्र स्वरूपोत्प्रेक्षायां यथा-

> जानेऽतिरागादिदमेव बिम्बं
> बिम्बस्य च व्यक्तमितोऽधरत्वम् ।
> द्वयोर्विशेषावगमक्षमाणां
> नाम्नि भ्रमोऽभूदनयोर्जनानाम् ॥

अत्र प्रसिद्धफले बिम्बतापह्नुत्यातिरागेण निमित्ते- दमयन्त्यधरे तदुत्प्रेक्षा पर्यस्तापह्नुतिगर्भा । हेतूत्प्रेक्षाया-

तद्गर्भत्वं प्राग्लिखिते हेतूत्प्रेक्षोदाहरणे एव दृश्यते । तत्र चान्धकारेष्वान्ध्यहेतुत्वमपह्नुत्यान्यत्र तन्निवेशितम् । फलोत्प्रेक्षायां यथा–

रवितप्तो गजः पद्मांस्तद्गृह्यान्बाधितुं ध्रुवम् ।
सरो विशति न स्नातुं गजस्नानं हि निष्फलम् ॥

अत्र गजस्य सरःप्रवेशं प्रति फले स्नाने फलत्वमपह्नुत्य पक्ष्यबाधने तन्निवेशितम् । अलमनया प्रसक्तानुप्रसक्त्या प्रकृतमनुसरामः ॥ ३६ ॥

(अ०चं० )–जाने इति ॥ दमयन्तीं वर्णयतो नलस्योक्तिः । अतिशयिताद्रागाल्लौहित्यादिदमधरस्वरूपमेव बिम्बमिति जाने न तु बिम्बफलमित्येवकारार्थः । बिम्बस्य बिम्बफलस्यातोऽस्मादोष्ठादधरत्वं निकृष्टत्वं व्यक्तं स्फुटम् । कथं तर्हि विपरीता लोके प्रसिद्धिस्तत्राह–द्वयोरनयोर्विशेषस्य तारतम्यस्यावगमे बोधेक्षमाणामसमर्थानां जनानां नाम्नि भ्रमो विपर्यासोऽभूदिति ॥ अन्यत्रेति । सूर्यकर्तृके नेत्रापरपर्यायगोनयने इत्यर्थः । निवेशितमुत्प्रेक्षितम् ॥ रवीति । रविणा सन्तप्तो गजस्तस्य रवेर्गृह्यान्पक्ष्यान्बन्धूनिति यावत् । ध्रुवं प्रायो बाधितुं सरः प्रविशति न तु स्नातुं स्नानार्थम् । हि यस्माद्गजस्य स्नानं निष्फलं निष्प्रयोजनमित्यन्वयः ॥ प्रसक्तानुप्रसक्त्येति । अतिशयोक्तेः सापह्नवत्वकथनप्रसङ्गादलङ्कारसर्वस्वकृदुक्तं स्वरूपोत्प्रेक्षायां शुद्धापह्नुतिगर्भत्वं दर्शितं तदनुप्रसक्त्या च त्रिविधास्वप्युत्प्रेक्षासु पर्यस्तापह्नुतिगर्भत्वमित्यर्थः ॥ ३६ ॥

(चंद्रा० )–भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनम् ।
अन्यदेवास्य गाम्भीर्यमन्यद्धैर्यं महीपतेः ॥ ३७ ॥

(कुवल० )–अत्र लोकप्रसिद्धगाम्भीर्याद्यभेदेऽपि भेदो वर्णितः । यथा वा–अन्येयं रूपसम्पत्तिरन्या वैदग्ध्यधोरणी ॥
नैषा नलिनपत्राक्षी सृष्टिः साधारणी विधेः ॥ ३७ ॥

( अ०चं० )–भेदकेति ॥ तस्यैव तज्जातीयस्यैवान्यत्ववर्णनं तज्जातीयभिन्नत्वेन वर्णनं तच्चाहार्यं बोध्यम् । एवमग्रेऽपि । तेन भ्रान्तौ नातिव्याप्तिः । इदं च लोकोत्तरत्वप्रतिपत्त्यर्थम् ॥ अन्यदेवेति । अस्य महीपतेर्गाम्भीर्यमन्यदेव प्रसिद्धगाम्भीर्यभिन्नमेवेत्यर्थः ॥ अन्येयमिति । रूपं सौन्दर्यम्,

वैदग्ध्यं चातुर्यम्, धोरणी परिपाटी । एषा नलिनपत्राक्षी विधेः साध
सृष्टिर्नैवेत्यन्वयः । अत्रोत्तरार्धे नञ्भङ्ग्याऽन्यत्ववर्णनं विशेषः ॥ ३

**(चंद्रा०)सम्बन्धातिशयोक्तिःस्यादयोगे योगकल्पन
सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम्॥३**

**( कुव० )-यथा वा-कतिपयदिवसैः क्षयं प्रयाया-
त्कनकगिरिः कृतवासरावसानः ।
इति मुदमुपयाति चक्रवाकी
वितरणशालिनि वीररुद्रदेवे ॥**

**अत्र चक्रवाक्याः सूर्यास्तमयकारकमहामेरुक्षयसम्भ
नाप्रयुक्तसन्तोषासम्बन्धेऽपि तत्सम्बन्धो वर्णितः ॥ ३**

( अ०चं० )-सम्बन्धेति ॥ अयोगे असम्बन्धे योगकल्पनं सम्बन्धवर्ण
सम्बन्धश्चाभेदभिन्नत्वे सत्यन्यत्वाद्यनिरूपितो ग्राह्यः । तेन रूपक
शयोक्त्यादिप्रभेदेषु नातिव्याप्तिः ॥ सौधेति । 'सौधोऽस्त्री राजस
इत्यमरः । नन्वत्रैव स्पृशन्तीवेन्दुमण्डलमितीवपदप्रयोगे उत्प्रेक्षा
तेस्तदप्रयोगे गम्योत्प्रेक्षात्वमुचितम् । इवादिसत्त्वे या वाच्योत्
सैवेवाद्यभावे गम्योत्प्रेक्षेति नियमात् । अन्यथा त्वत्कीर्तिर्भ्रमणश्रान्ते
दिपूर्वोदाहृते पद्येऽपि गम्योत्प्रेक्षा न स्याद्विशेषाभावादिति चेन्नै
उपदर्शितनियमस्यालङ्कारान्तराविषय एवाभ्युपगमात् । अन्यथा
मुखं चन्द्र इत्यादौ नूनमित्यप्रयोगे गम्योत्प्रेक्षापत्तेः । एवं च प्र
सम्बन्धवर्णनरूपातिशयोक्त्यलङ्कारविषये न गम्योत्प्रेक्षावसरः । त्व
र्तिरित्युदाहरणे तु भ्रमणश्रान्तत्वरूपहेत्वंशे गम्योत्प्रेक्षाभिप्रेता
स्वर्गङ्गाप्रवेशांश इति सर्वमवदातम् । असन्दिग्धमुदाहरणान्तरम
यथा वेति । कतिपयेति ॥ वीररुद्रदेवाख्ये नृपे वितरणशालिनि दा
लिनि सति चक्रवाकी इति मुदं सन्तोषमुपयाति प्राप्नोति । इति वि
कृतं वासरस्यावसानं नाशो येन स कनकगिरिः सुमेरुः कतिपयै
दिवसैः क्षयं प्रयायादिति । सम्भावनायां लिङ् ॥ ३८ ॥

**(चंद्रा०)-योगेऽप्ययोगोऽसम्बन्धातिशयोक्तिरितीर्य
त्वयि दातरि राजेन्द्र स्वर्द्रुमान्नाद्रियामहे ॥३**

**( कुवल० )-अत्र स्वर्द्रुमेष्वादरसम्बन्धेऽपि तदसम्बन्धो व
इत्यसम्बन्धातिशयोक्तिः ।**

यथा वा—अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥ ३९ ॥

(अ०चं० )—योगेऽपीति ॥ योगे सत्यप्ययोगवर्णनमित्यर्थः । स्वर्गस्था द्रुमाः कल्पवृक्षादयः । स्वर्द्रुमेष्विति विषयसप्तमी । स्वर्द्रुमविषये य आदरस्तस्य सम्बन्धेऽप्यर्थादर्थिषु । यद्वा—अर्थिषु स्वर्द्रुमविषयादरसम्बन्धाभावप्रतीतौ तत्समानवित्तिवेद्यतया स्वर्द्रुमेष्वत्यादरविषयत्वाभावावगमाद्यथाश्रुतमेव साधु ॥ अनयोरिति । अनवद्यानि अङ्गानि यस्यास्तथाभूते इति सम्बोधनम् । जृम्भमाणयोर्वर्द्धमानयोरनयोः स्तनयोस्तव बाहुलतयोरन्तरे मध्ये पर्याप्तोऽवकाशो नास्तीत्यन्वयः । अत्र बाहुलतयोरन्तरे स्तनपर्याप्तावकाशसम्बन्धेऽपि तदसम्बन्ध उक्तः ॥ ३९ ॥

(चन्द्रा० )-अक्रमातिशयोक्तिः स्यात्सहत्वे हेतुकार्ययोः।
आलिङ्गन्ति समं देव ज्यां शराश्च पराश्च ते॥४०॥

(कुव० )--अत्र मौर्व्यां यदा शरसन्धानं तदानीमेव शत्रवः क्षितौ पतन्तीति हेतुकार्ययोः सहत्वं वर्णितम् ।

यथा वा—
मुञ्चति मुञ्चति कोशं भजति च भजति प्रकम्पमरिवर्गः ॥
हम्मीरवीरखड्गे त्यजति त्यजति क्षमामाशु ॥

अत्र खड्गस्य कोशत्यागादिकाल एव रिपूणां धनगृहत्यागादि वर्णितम् ॥ ४० ॥

(अ०चं०)—अक्रमेति ॥ क्रमः पौर्वापर्यं तदभावोऽक्रमस्तद्रूपस्यातिशयोक्तिरित्यर्थः।सहत्वे समकालत्वे।आलिङ्गन्ति समं युगपज्ज्यां मौर्वीं पृथ्वीं च पराः शत्रवः॥ मुञ्चतीति । हम्मीरसंज्ञकस्य वीरस्य खड्गे कोशं पिधानं मुञ्चति सत्यरीणां वर्गः समूहोपि कोशं भाण्डारं मुञ्चति,तथा खड्गे प्रकम्पमुल्लासने भजति सति स प्रकृष्टं कम्पं भजति। एवं खड्गे क्षमां क्षांतिं त्यजति सति सोपि क्षमां पृथ्वीं त्यजतीत्यर्थः । 'कोशोऽस्त्री कुड्मले खड्गे पिधानेऽर्थौघदिव्ययोः ।' इत्यमरः । अत्र शतृप्रत्ययभङ्ग्या यौगपद्यवर्णनं विशेषः ॥ धनगृहेति । धनसम्बन्धिगृहेत्यर्थः ॥ ४० ॥

(चन्द्रा० )--चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे ।
यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका॥४१॥

(कुव०)-अत्र नायकप्रवासप्रसक्तिमात्रेण योषितोऽति-
शर्यं कार्यमुखेन दर्शितम् ।

यथा वा-

आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितं
लाक्षारञ्जनवार्तयाऽपि सहसा रक्तं तलं पादयोः ।
अङ्गानामनुलेपनस्मरणमप्यत्यन्तखेदावहं
हन्ताधीरदृशः किमन्यदलकामोदोऽपि भारायते ॥
यामि न यामीति धवे वदति पुरस्तात्क्षणेन तन्वङ्ग्याः ।
गलितानि पुरो वलयान्यपराणि तथैव दलितानि ॥४१॥

(अ०चं०)-चपलेति ॥ हेतोः प्रसक्तिर्ज्ञानं तज्जन्ये कार्ये सतीत्यर्थः । या-
मीति उदिते उक्ते । प्रियेणेति शेषः । तन्व्या ऊर्मिका अङ्गुलीयकं व-
कङ्कणमभवदित्यर्थः । "ऊर्मिका त्वङ्गुलीये स्याद्वस्त्रभङ्गतरङ्गयो-
इति विश्वः । कार्यमुखेनेति । अङ्गुलीयकस्य कङ्कणपदप्राप्तिरूपका-
र्णनद्वारेणेत्यर्थः ॥ आदातुमिति । सहजसौकुमार्यवत्या विरहदश-
तदतिशयवर्णनमिदम् । हन्तेति खेदे । आदातुं ग्रहीतुं सकृदेकवार-
कुसुमे ईक्षिते सत्यधीरदृशो हस्ताग्रमालोहितं भवतीति शेषः । अ-
किमु गृहीते इति गम्यते । लाक्षया यद्रञ्जनं तद्वार्तयापि सहसाक-
त्पादयोस्तलं रक्तं भवति किमु रञ्जनेनेति पूर्ववत् । एवमङ्गानां चन्-
दिना यदनुलेपनं तत्स्मरणमप्यत्यन्तखेदकरं किमुतानुलेपनं कि-
द्वाच्यमिति शेषः । अलकानामगुरुधूपाद्यामोदोऽपि भारायते भार-
चरतीत्यर्थः । कर्तरि क्यङ् । अत्रादानादिरूपहेतुप्रसक्तिमात्रेण ह-
ग्रलौहित्यादिरूपकार्योत्पत्तेः साक्षादेव वर्णनं न तु कार्यमुखेनेति
स्माद्भेदः । हेतुकार्ययोरिव हेतुप्रसक्तिकार्ययोरपि समकालत्वं स-
तीति सूचयितुमुदाहरणान्तरमाह-यामीति । धवे दयिते यामि न
मीति वदति सति तत्क्षणेन तत्कालमेव तन्वङ्ग्याः पुरोवलयान्यी
कङ्कणानि पुरः प्रथमं गलितानि । अन्यान्यपराण्यपि तथैव तत्काल-
दलितानि भग्नानीत्यन्वयः । 'पुरोग्रे प्रथमे च स्यात्' इति विश्वः ।
वदति गलितानीति शतृप्रत्ययेन समकालतावगतिः ॥ ४१ ॥

(चंद्रा०)-अत्यन्तातिशयोक्तिस्तु पौर्वापर्यव्यतिक्र-
अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ॥४

(कुव०)--यथा वा--कवीन्द्राणामासन्प्रथमतरमेवाङ्गणभुव-
श्चलद्भृङ्गासङ्गाकुलकरिमदामोदमधुराः।
अमी पश्चात्तेषामुपरि पतिता रुद्रनृपतेः
कटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः॥

एतास्तिस्रोऽप्यतिशयोक्तयः कार्यशैघ्र्यप्रत्यायनार्थाः॥४२॥

(अ०चं०)--अत्यन्तेति॥ अत्र हेतुकार्ययोरित्यनुवर्तते। तत्पौर्वापर्येति क्वचित्पाठः साधुरेव। व्यतिक्रमोऽत्र वैपरीत्यम्। अग्रे प्रथममनुनीता समाहिता॥ कवीन्द्रणामिति। कविश्रेष्ठानामङ्गणसम्बन्धिन्यो भूमयः प्रथमतरमेव प्रथममेव चलतां चपलानां भृङ्गाणां भ्रमराणामासङ्गेनाकुलानां करिणां मदजलस्यामोदेन परिमलेन मधुरा रमणीया आसन्नभवन्। पश्चादनन्तरं तेषां कवीनामुपरि रुद्रसंज्ञकस्य नृपतेरमी दृश्यमानाः कटाक्षाः पतिताः। कीदृशाः। क्षीरमुदकं यस्य तथाभूतस्य क्षीरार्णवस्य प्रसरन्तीनामुरुवीचीनां बृहत्तरङ्गाणां सहचरास्तत्सदृशा इत्यर्थः। "उदकस्योदः संज्ञायाम्" इत्युदादेशः। अत्र यथोक्तकटाक्षरूपकार्यमुखेन नृपतिप्रसादरूपहेतुकथनं पूर्वस्माद्विशेषः। एता अव्यवहितोक्ताः। अथोक्तेषु प्रभेदेष्वनुगतप्रवृत्तिनिमित्ताभावात्कथमतिशयोक्तिपदप्रयोग इति चेदत्राहुः। तावत्प्रभेदान्यतमत्वमेव सर्वानुगतमतिशयोक्तिपदप्रवृत्तिनिमित्तं तदेव च सामान्यलक्षणमिति। नव्यास्तु निगीर्याध्यवसानमेवातिशयोक्तिः प्रभेदान्तरं त्वनुगतरूपाभावादलङ्कारान्तरमेव। न चान्यत्वादिप्रभेदेष्वन्यत्वादिभिरभेदादीनां निगरणं सम्भवतीति वाच्यम्, अन्यत्वादिभिरभेदवस्तुप्रतीतेरेव चमत्कारित्वेनानुभवसिद्धत्वान्यत्वादिभिरभेदप्रतीत्यङ्गीकारेऽनुभवासङ्गतेः। अन्यतमत्वं तु नालङ्कारविभाजकोपाधितां भजते चमत्काराप्रयोजकत्वादिति वदन्ति। वस्तुतस्तु रूपकभिन्नत्वे सति चमत्कृतिजनकाहार्यारोपनिश्चयविषयत्वमेवातिशयोक्तिसामान्यलक्षणम्। रूपकवारणाय सत्यन्तं, भ्रान्तिवारणायाहार्येति, उत्प्रेक्षानिरासाय निश्चयेति। रूपकातिशयोक्तावभेदस्य द्वितीयप्रभेदेऽन्यत्वस्य तृतीये सम्बन्धस्य चतुर्थेऽसम्बन्धस्य पञ्चमे सहत्वस्य षष्ठे हेतुप्रसक्तिजन्यत्वस्य सप्तमे पूर्वापरत्वयोश्च तथाविधारोपविषयत्वसत्त्वात्सर्वत्र लक्षणसमन्वयः। न चैवं विधारोपस्य रूपकस्वभावोक्तिभिन्नेषु प्रायशः सर्वालङ्कारेषु सत्त्वादतिप्रसङ्ग इति वाच्यम्। इष्टापत्तेः। अलङ्कारान्तराणां चमत्कारे प्रधानतया तदङ्गत्वेनावस्थिताया अतिशयोक्तेरप्राधान्येन व्यपदेशानर्हत्वात्। प्राधान्येन व्यपदेशा भवन्तीति न्यायात्। अलङ्कारान्तराणामेव

प्रधानत्वेन व्यपदेशार्हत्वात् । अत एव काव्यप्रकाशकृता विशेषाल
प्रसङ्गेऽभिहितं "सर्वत्रैवंविधे विषयेऽतिशयोक्तिरेव प्राणत्वेनावति
तां विना प्रायेणालङ्कारत्वाभावात् ।" अत एवोक्तम् "सैषा
वक्रोक्तिरनयार्थो विभाव्यते । यत्नोऽस्याः कविभिः कार्यः कोऽलङ्का
नया विना ।" इति । दण्डिनाप्युक्तम्-"अलङ्कारान्तराणामप्येका
परायणम् । वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥" इति ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानंदटीकायामतिशयोक्त्य-
लङ्कारप्रकरणम् ॥ १३ ॥

---

## तुल्ययोगितालङ्कारः १४.

(चंद्रा०)-वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगित
सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च ॥४
त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते ।
मालतीशशभृल्लेखाकदलीनां कठोरता ॥ ४४

(कुवल०)-प्रस्तुतानामप्रस्तुतानां वा गुणक्रियारूपैकध
न्वयस्तुल्ययोगिता । सङ्कुचन्तीति प्रस्तुततुल्ययोगित
उदाहरणम् । तत्र प्रस्तुतचन्द्रोदयकार्यतया वर्णनीय
सरोजानां प्रकाशभीरुस्वैरिणीवदनानां च सङ्कोचरू
क्रियान्वयो दर्शितः । उत्तरश्लोके नायिकासौकुमार्यव
प्रस्तुतेऽप्रस्तुतानां मालत्यादीनां कठोरतारूपैकगुणान्व

( अ०चं० )-तुल्ययोगितां लक्षयति-वर्ण्यानामिति ॥ वर्ण्यत्वेन प्रस्
नामित्यर्थः । इतरेषामप्रस्तुतानाम् । एतच्चोभयमपि सावधारण
वर्ण्यानामेवेतरेषामेव वेत्यर्थः । बहुवचनमनेकार्थकम् । द्वयोर्ध
स्यापि सङ्ग्राह्यत्वात् । धर्मैक्यं धर्मस्य ऐक्यमेकत्वमेको धर्म इति
वत् । स च चमत्कारकारी बोध्यः । एवं चानेकप्रस्तुतमात्रसम्ब
चमत्कारिधर्मानेकाप्रस्तुतमात्रसम्बद्धैकधर्मान्यतरत्वं लक्षणं बोध्
मुखं विकसितस्मितमित्यादावतिप्रसङ्गवारणायानेकेति । अत्र च
प्रेक्षितादिरूपानेकवर्ण्यसम्बन्धो नैको धर्म इति तन्निरासः । दी
वारणाय मात्रेति । प्रस्तुताप्रस्तुतप्रभेदसाधारण्यायान्यतरत्वनिवे

त्वदङ्गेति । प्रियां प्रति दयितोक्तिः । तवाङ्गस्य मार्दवे सौकुमार्ये दृष्टे सति कस्य चित्ते मालत्यादीनां कठोरता न भासते । अपि तु सर्वस्यैवेत्यर्थः । शशं बिभर्तीति शशभृच्चन्द्रस्तस्य लेखा कला ॥ गुणक्रियारूपेति । एतच्च तथाविधधर्मस्य प्रायशो गुणक्रियारूपत्वमित्यभिप्रेत्योक्तं न तु लक्षणे तेन रूपेण धर्मस्य निवेशः । गौरवात्प्रयोजनाभावाच्च । यत्तु कैश्चिदेतद्ग्रन्थदूषणलालसैर्धर्मस्य गुणक्रियारूपत्वेन लक्षणे निवेश इत्याशयमारोप्याभिहितम् । तदेतदापाततः "शासति त्वयि हे राजन्नखण्डावनिमण्डलम् । न मनागपि निश्चिन्ते मण्डले शत्रुमित्रयोः ॥" इत्यत्राभावरूपधर्मस्यैवान्वयादिति तदिदमापाततोऽपि न मनोरमम् । तथाहि शासतीति त्वदुदाहृतपद्ये निश्चिन्तेनेति निश्चिन्तत्वभेदः शत्रुमित्रमण्डलधर्मतयोपात्तः स च गुणस्वरूप एव । चिन्ताभाववद्भेदस्य चिन्तानतिरिक्तत्वात् । अन्यथा चिन्ताभावाभावस्याप्यतिरिक्तत्वापत्तेः । अथ तत्रापि वैपरीत्यादिष्टापत्तिमालम्बसे भवत्वेवं तुष्यतु भवान् । एवमप्यभावस्य कथं गुणबहिर्भावः । जातिक्रियाद्रव्यातिरिक्तस्यैव चतुष्टयी शब्दानां प्रवृत्तिरिति वदद्भिर्वैयाकरणैस्तदनुसारिभिश्चालङ्कारिकैर्गुणत्वाङ्गीकारात् । अत एव जातिगुणयोर्विरोधे प्रकाशकृद्भिरुदाहृतगिरयोऽप्यनुन्नतियुज इति । तथा विद्यानाथेनापि—अमदः सार्वभौमोऽपीति । वस्तुतस्तु लक्षणेन तेन रूपेण धर्मस्य निवेशोऽभिप्रेत इत्यावेदितमतो न काप्यनुपपत्तिरिति । स्वैरिणी स्वेन ईरितुं शीलमस्यास्तादृशी व्यभिचारिणीति यावत् "स्वादीरेरिणोः" इति वृद्धिः । 'स्वैरिणी पांसुला च स्यात्' इत्यमरः ॥

कुमा० )–यथा वा–सञ्जातपत्रप्रकरान्वितानि
　　समुद्वहन्ति स्फुटपाटलत्वम् ।
विकस्वराण्यर्ककराभिमर्शा-
　　द्दिनानि पद्मानि च वृद्धिमीयुः ॥
नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
　　देकान्तशैत्यात्कदलीविशेषाः ।
लब्ध्वा हि लोके परिणाहि रूपं
　　जातास्तदूर्वोरुपमानबाह्याः ॥

अत्र ग्रीष्मवर्णने तदीयत्वेन प्रस्तुतानां दिनानां पद्मानां चैकक्रियान्वयः । ऊरुवर्णनेऽप्रस्तुतानां करिकराणां कदलीविशेषाणां चैकगुणान्वयः ॥ ४३ ॥ ४४ ॥

( अ०चं० )-सञ्जातेति ॥ दिनानि पद्मानि च वृद्धिमीयुः प्रापुः । कीदृशा सञ्जातैः पत्राणां प्रकरैः समूहैरन्वितानि । पूर्वपत्राणां वसन्तेन वि नात् । तथा स्फुटा विकासिताः पाटला वृक्षविशेषा येषु तानि भावस्तत्त्वं समुद्वहन्तीति शत्रन्तम् । दधानानीत्यर्थः । पद्मपक्षे तु टानि विकसितानि च पाटलवर्णानि तेषां भावस्तत्त्वमित्यादि पूर्व एवमर्कस्य करैः किरणैरभिमर्शनाद्धिकस्वराणि भासुराणि दि पद्मानि तु विकासशालीनि ॥ नागेन्द्रेति । नागेन्द्राणां गजश्रे हस्ताः शुण्डाः कदलीविशेषाश्च परिणाहो विशालता तच्छालि स्वरूपं लब्ध्वापि यथाक्रमं त्वचि कर्कशत्वात्कठोरत्वादेकान्तेन मेन शैत्याच्च हेतोर्लोके तस्याः पार्वत्या ऊर्वोरुपमानाद्बाह्या उप त्वरहिता जाता इत्यन्वयः ॥ तदीयत्वेनेति । तत्कालिकत्वेनेत्य ग्रीष्मकालिकवस्तुवर्णनस्यैव ग्रीष्मवर्णनरूपत्वादिति भावः ॥ क्रियेति । वृद्धिप्राप्तिरूपकक्रियान्वय इत्यर्थः ॥ एकगुणेति । उप बाह्यत्वरूपैकगुणेत्यर्थः ॥ ४३ ॥ ४४ ॥

**(चन्द्रा०)-हिताहिते वृत्तितौल्यमपरा तुल्ययोगित**
**प्रदीयते परा-भूतिर्मित्रशात्रवयोस्त्वया ॥ ४**

( कुवल० )-अत्र हिताहितयोर्मित्रशात्रवयोरुत्कृष्टभूतिद स्य पराभवदानस्य च श्लेषेणाभेदाध्यवसायाद्वृत्तितौल्य

यथा वा-यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥

अत्र वृश्चति सिञ्चत्यर्चति इत्यध्याहारेण वाक्यानि रणीयानि । पूर्वोदाहरणं स्तुतिपर्यवसायि इदं तु नि पर्यवसायीति भेदः । इयं सरस्वतीकण्ठाभरणोक्ता ल्ययोगिता ॥ ४५ ॥

( अ०चं० )-हिताहित इति । हिताहितविषये इत्यर्थः ॥ वृत्तितौ मिति । वृत्तिर्वर्तनं व्यवहरणमिति यावत् । तस्य तौल्यं सा अपरा पूर्वोक्तविलक्षणा ॥ प्रदीयत इति । परा उत्कृष्टा भूतिः स त्तिरेव, पराभूतिः पराभवः । शत्रूणां समूहः शात्रवम् । "तस्य सम इत्यण् ॥ पराभवदानस्येति । शत्रुसम्बन्धिपराभवसम्पादनस्येत्य पराभवस्य मुख्यदानासम्भवात् । अत एव सम्प्रदानत्वासम्भवा त्रशात्रवयोरिति सम्बन्धसामान्ये षष्ठी । श्लेषेण पराभूतिपदश्लेषे

यथा वेति। अत्र च शब्दा अप्यर्थाविरोधद्योतकाः॥ अत्रेति। योऽपि निम्बं परशुना छिनत्ति, योऽप्येनं मधुयुक्तेन सर्पिषा आज्येन सिञ्चति, योऽप्येनं गन्धमाल्याद्यैरर्चतीति क्रमेणेत्यर्थः । उक्तप्रकारस्य तुल्ययोगितापदवाच्यत्वे वृद्धसम्मतिं दर्शयति–इयमिति ॥ तथा च वृद्धव्यवहारान्नार्थस्तुल्ययोगिताशब्द इति भावः । अत्र केचिदाहुः–"नेयं तुल्ययोगिता पूर्वोक्ततुल्ययोगितातो भेदमर्हति । वर्ण्यानामितरेषां वेत्यादिपूर्वोक्तलक्षणाक्रान्तत्वात् । एकानुपूर्वीबोधितवस्तुकर्मकदानमात्रत्वस्य परम्परया तादृशशब्दस्य वा धर्मस्यैक्यात् । यश्च निम्बमित्यत्रापि कटुत्वविशिष्टनिम्बस्यैव परम्परया छेदकसेचकपूजकधर्मत्वसम्भवात्" इति । तदेतत्पेशलम् । तथाहि । यत्रानेकान्वयित्वेन ज्ञातो धर्मस्तेषामौपम्यगमकत्वेन चमत्कृतिजनकस्तत्र पूर्वोक्तप्रकारः। यत्र तु हिताहितोभयविषयकशुभाशुभरूपैकव्यवहारस्य व्यवहर्तृगतस्तुतिनिन्दान्यतरद्योतकतया चमत्कृतिजनकत्वं तत्रापर इति भेदात् । नह्यत्र पराभूतिशब्दस्य तदर्थकर्मदानस्य वा परम्परया शत्रुमित्रगतत्वेन भानमपि तु श्लेषबलादेकत्वेनाध्यवसितस्य तादृशदानस्य राजगतत्वेनैवेति कथं पूर्वोक्तलक्षणाक्रान्तत्वम् । एतेन "यश्च निम्बम्" इत्यत्र कटुत्वविशिष्टनिम्बस्यैव परम्परया छेदकसेचकपूजकधर्मत्वमिति निरस्तम् । वस्तुगत्या तद्धर्मत्वस्यालङ्कारतासम्पादकत्वाभावात् । अन्यथा "सङ्कुचन्ति सरोजानि" इत्येतावतैव तुल्ययोगितालङ्कारापत्तेः । किं त्वनेकगतत्वेन ज्ञायमानधर्मत्वस्यैव तुल्ययोगिताप्रयोजकत्वमिति तदभावे तदन्तर्गतिकथनमसमञ्जसमेव । अथाप्युक्तोदाहरणयोस्तथा भानमस्तीत्याग्रहस्तथापि न पूर्वोक्तलक्षणस्यात्र सम्भवः । "धर्मोऽर्थ इव पूर्णश्रीस्त्वयि राजन्विराजते ।" इति प्रकृतयोरुपमायामतिव्याप्तिवारणार्थमनेकानुगतधर्मत्वपर्याप्तविषयितासम्बन्धावच्छिन्नावच्छेदकताकचमत्कृतिजनकताश्रयज्ञानविषयधर्मत्वमिति विवक्षायास्तत्रावश्यकत्वात् । प्रकृते च हितत्वाहितत्वादेर्विषयस्याधिकस्यानुप्रवेशादिति विभावनीयम् ॥४५॥

**(चंद्रा०)–गुणोत्कृष्टैः समीकृत्यवचोऽन्यातुल्ययोगिता।**

**लोकपालो यमः पाशी श्रीदः शक्रो भवानपि॥**

(कुव०)–अत्र वर्णनीयो राजा शक्रादिभिर्लोकपालत्वेन समीकृतः ।

यथा वा–सङ्गतानि मृगाक्षीणां तडिद्विलसितान्यपि ।
क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥

पूर्वत्र स्तुतिरिह तु निन्दा । इयं काव्यादर्शे दर्शिता इमां तुल्ययोगितां सिद्धिरिति केचिद्व्यवजह्रुः ।
यदाह जयदेवः–

सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये
युवामेवेह विख्यातौ त्वं बलैर्जलधिर्जलैः ॥

इति । मतान्तरेष्वत्र वक्ष्यमाणं दीपकमेव ॥ ४६ ॥

( अ०चं० )–गुणोत्कृष्टैरिति ॥ गुणैरुत्कृष्टाः श्रेष्ठास्तैरित्यर्थः।समीकृत्य सा विवक्षित्वा ॥वच इति वचनं वचःप्रतिपादनमिति यावत् अर्थात्तत्साध णधर्मस्य । अन्येति धर्मस्य वर्ण्यावर्ण्यगतत्वादुक्तविलक्षणेत्यर्थः। पाश स्यास्तीति पाशी वरुणः। 'प्रचेता वरुणः पाशी' इत्यमरः। श्रीदः कु शक्र इन्द्रः लोकपालपदं चेन्द्रादिषु रूढम् । राज्ञि तु योगमात्रेण प्र क्तम्॥सङ्गतानीति। सङ्गतानि सङ्गमाः तडितां विद्युतां विलसितानि निबिडं यथा स्यात्तथा आरब्धानीति सङ्गमपक्षे घनैर्मेघैरारब्धानीति तडिद्विलसितपक्षेऽर्थः । काव्यादर्शे एतन्नामकदण्डिकृतग्रन्थे दर्शि तुल्ययोगितापदवाच्यत्वेन निर्दिष्टा । केचिदालङ्कारिका व्यवजह्रुः हृतवन्तः । ख्यातेषु गुणत्वेन प्रसिद्धेषु ॥ युवामेवेति । इह भूलोके व सैन्यैः । अत्र च सैन्यजलयोः प्रसरणशीलत्वादिसादृश्याद्बिम्बप्रतिबि भावेनाभेदमाश्रित्य धर्मैक्यं बोध्यम् । मतान्तरेष्विति बहुवचनेन बह म्मततया दंडयुक्ततुल्ययोगितानामस्वरसो ध्वन्यते । स च दीपकतु योगितयोर्भेदकथनावसरे व्यक्तीभविष्यतीति संक्षेपः ॥ ४६ ॥

इत्यलंकारचन्द्रिकायां कुवलयानन्दटीकायां तुल्ययोगितालङ्कारप्रकरणम् ॥ १४ ॥

---

## दीपकालङ्कारः १५.

(चन्द्रा०)-वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः
मदेन भाति कलभः प्रतापेन महीपतिः ॥ ४७

( कुवल० )–प्रस्तुताप्रस्तुतानामेकधर्मान्वयो दीपकम् । य कलभमहीपालयोः प्रस्तुताप्रस्तुतयोर्भानक्रियान्वयः ।

यथा वा-मणिः शाणोल्लीढः समरविजयी हेतिदलितो
मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥

अत्र प्रस्तुतानां नृपाणामप्रस्तुतानां मण्यादीनां च शोभैकधर्मान्वयः । प्रस्तुतैकनिष्ठः समानो धर्मः प्रसङ्गादन्यत्रोपकरोति प्रासादार्थमारोपितो दीप इव रथ्यायामिति दीपसाम्याद्दीपकम्। "संज्ञायां च" इति इवार्थे कन् प्रत्ययः।

अ०चं० )-दीपकं लक्षयति-वदन्तीति ॥ वर्ण्यावर्ण्यान्वितैकचमत्कारिधर्मो दीपकमित्यर्थः । उपमादिवारणायात्रापि पूर्ववल्लक्षणपरिष्कारो बोध्यः।कलभः करिशावकः॥भानक्रियेति। क्रियारूपैकधर्मान्वय इत्यर्थः। अत्रापि क्रियाविशेषणीभूतयोर्मदप्रतापयोर्बिम्बप्रतिबिम्बभावो बोध्यः ॥ यथा वेति। शाणेन निकषपाषाणेनोल्लीढ उल्लिखितो मणिः। तथा हेतिभिरायुधैर्निहतः कृतक्षतः समरे सङ्ग्रामे विजयशीलो योद्धा, मदेन क्षीणो नागो हस्ती, शरत्काले श्यानानि शुष्काणि पुलिनानि जलनिर्मुक्ततटानि यासां ताः सरितो नद्यः, कलामात्रावशिष्टश्चन्द्रः, सुरते मृदिता चुम्बनालिङ्गनाद्युपमर्दम्लापिताङ्गी बाला नवयौवना वनिता स्त्री, एवमर्थिषु याचकेषु गलितः सङ्क्रान्तो विभवः समृद्धिर्येषां ते नृपाश्च तनिम्ना तनोः कृशस्य भावस्तनिमा कार्श्यं तेन शोभन्त इत्यन्वयः। 'शाणस्तु निकषः कषः' इत्यमरः॥ शोभैकेति। शोभारूपैकधर्मेत्यर्थः। पूर्वोदाहरणे आदिदीपकमिह त्वन्तदीपकमिति भेदः। प्रस्तुताप्रस्तुतसाधारणधर्मस्य दीपकपदवाच्यतायां बीजमाह-प्रस्तुतैकेत्यादि॥ प्रस्तुतैकनिष्ठः प्रस्तुतैकपरः प्रस्तुतान्वयविवक्षयाभिहित इति यावत्। रथ्यामिवेत्यनन्तरमुपकरोतीत्यनुषज्यते । इतीति चाध्याहार्यम् । इति दीपकसादृश्यात्समानो धर्मो दीपकमुच्यत इति शेषः।

कुव० )-यद्यपि-

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥

इत्यत्र प्रस्तुतानामप्रस्तुतानां युगपद्धर्मान्वयस्तथापि प्रासङ्गिकत्वं न हीयते, वस्तुगत्या प्रस्तुतोद्देशेन

प्रस्तुतस्यैव वर्णनस्याप्रस्तुतेऽन्वयात् । न हि दी
रथ्याप्रासादयोर्युगपदुपकारत्वेन जामात्रर्थं अपितस्य
स्यातिथिभ्यः प्रथमपरिवेषणे न च प्रासङ्गिकत्वं हीये
तुल्ययोगितायां त्वेकं प्रस्तुतमन्यदप्रस्तुतमिति विशे
ग्रहणात्सर्वोद्देशेनैव धर्मान्वय इति विशेषः । अयं चान
रपरो विशेषः । उभयोरनयोरुपमालङ्कारस्य गम्यत्वावि
षेप्यत्राप्रस्तुतमुपमानं प्रस्तुतमुपमेयमिति व्यवस्थित
मानोपमेयभावस्तत्र तु विशेषाग्रहणादैच्छिकः स इति

( अ०चं० ) यत्र धर्मस्य पूर्वं प्रस्तुतेऽन्वयः पश्चादन्यत्र यथोक्तोदाहर
स्तत्रैवेतरत्र प्रसङ्गोपकारित्वमित्याशयेन शङ्कते-यद्यपीति ॥ सुवर्ण
सुवर्णमेव पुष्पं यस्या इति विग्रहः। त्रयो गुणत्रयान्यतमयुक्ताः शूरश्चेत्य
प्रत्येकं चकारो नैरपेक्ष्यद्योतकः । कृतविद्यः प्रख्यातविद्यः । एतच्च प्र
ङ्गिकं पद्यं यदा यत्प्रसङ्गे पठ्यते तदा तस्य प्रस्तुतत्वमितरयोस्त्वप्रस
त्वमिति बोध्यम् ॥ युगपदिति । त्रयश्चिन्वन्तीति त्रिष्वपि युग
न्वय इत्यर्थः । चिन्वन्तीति बहुवचनान्तस्य प्रस्तुतमात्रेणैकवच
न्तेन पूर्वमन्वयायोगादिति भावः । समाधत्ते-तथापीति ॥ प्रासङ्गि
प्रसङ्गोपकारित्वम् ॥ न हीयत इति । तथा च धर्मस्य पश्चादन्वय
तत्र प्रयोजक इति भावः । किं तर्हि प्रयोजकं तत्राह-वस्तुगत्यै
प्रस्तुतोद्देशेन प्रस्तुतोद्देश्यकान्वयबोधेच्छया प्रस्तुतस्यैव पदाभि
स्यैव वर्णनस्य कर्मव्युत्पत्त्या तद्विषयधर्मस्य । तथा च चमत्का
प्रस्तुताप्रस्तुतान्वितस्वार्थं बोधयत्वितीच्छयोच्चरितपदाभिहित
स्योभयत्रान्वयेप्युद्देश्यताख्येच्छाविषयता प्रस्तुत एव न त्वप्रस्तुते।
तु विशेषणताख्यविषयतैवेति । तथाविधोद्देश्यताविरह एव प्रास
कत्वे बीजमित्याशयः। एतदेवोपपादयति-न हीति ॥ प्रासङ्गिकत्वमि
दीपसूपयोरथ्यातिथिविषये प्रसङ्गोपकारित्वमित्यर्थः । तथा च त्व
तस्य प्रासङ्गिकत्वं न स्यादिति भावः । इदमुपलक्षणम् । जामातृवि
प्रासङ्गिकत्वापत्तिरपि बोध्या । एतदेव तुल्ययोगितातो भेदकमित्य
तुल्ययोगितायां त्विति ॥ ननूद्देश्यत्वानुद्देश्यत्वयोश्चमत्काराप्रयोजक
त्रालंकारभेदप्रयोजकत्वं युक्तमित्यस्वरसादाह-अयं चेति । अयं व
माणः । अनयोर्दीपकतुल्ययोगितयोः । अत्र दीपके उपमानोपमेय
इत्यनंतरं गम्य इति शेषः । तत्र तुल्ययोगितायां विशेषाग्रहणात्प्र
ताप्रस्तुतत्वरूपव्यवस्थापकाभावादैच्छिकोऽव्यवस्थितः स उपमा

मेयभावः । नव्यास्तु-नैतावतापि तुल्ययोगितातो दीपकस्य पृथग्भाव उचितः । धर्मस्य सकृद्वृत्तित्वमूलाया विच्छित्तेरविशेषात् । अन्यथा तुल्ययोगितायामपि धर्मिणां केवलप्रकृतत्वस्य केवलाप्रकृतत्वस्य च विशेषस्य सत्त्वादलङ्कारद्वैतापत्तेः । तस्मात्तुल्ययोगिताया एव त्रैविध्यमुचितमित्याहुः ॥ ४७ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां दीपकालङ्कारप्रकरणम् ॥१५॥

## आवृत्तिदीपकालंकारः १६.

(चन्द्रा०)-त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम् ।
वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी ॥ ४८ ॥
उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ।
माद्यन्ति चातकास्तृप्ता माद्यन्ति च शिखावलाः ४९

(कुव० )-दीपकस्यानेकोपकारार्थतया दीपस्थानीयस्य पदस्यार्थस्योभयोर्वाऽऽवृत्तौ त्रिविधमावृत्तिदीपकम् । क्रमेणार्धत्रयेणोदाहरणानि दर्शितानि ।

यथा वा-उत्कण्ठयति मेघानां मालावर्गं कलापिनाम् ।
यूनां चोत्कण्ठयत्यद्य मानसं मकरध्वजः ॥
शमयति जलधरधारा चातकयूनां तृषं चिरोपनताम् ।
क्षपयति च वधूलोचनजलधारा कामिनां प्रवासरुचिम् ॥
वदनेन निर्जितं तव निलीयते चन्द्रबिम्बमम्बुधरे ।
अरविन्दमपि च सुन्दरि निलीयते पाथसां पूरे ॥

एवं चावृत्तीनां प्रस्तुताप्रस्तुतोभयविषयत्वाभावेपि दीपकच्छायापत्तिमात्रेण दीपकव्यपदेशः ॥ ४८ ॥ ४९ ॥

(अ०चं० )-त्रिविधमिति ॥ दीपकस्यावृत्तावावृत्तिदीपकं भवेत्तच्च त्रिविधमित्यर्थः ॥ वर्षतीति । शर्वरी रात्रिः वर्षं वत्सर इवाचरतीत्यर्थः । कदम्बानि कदम्बकुसुमानि उन्मीलन्ति विकसन्ति कुटजोद्गमाः कुटजकलिकाः स्फुटन्ति विकसन्ति तृप्ताश्चातका माद्यन्ति मत्ता भवन्ति शिखावला मयूराश्च माद्यन्तीत्यन्वयः । त्रैविध्यमुपपादयन्नेव व्याचष्टे-दीप-

कस्येति । क्रमेणेति ॥ आद्येऽर्थे वर्षतीति शब्दावृत्तिः । अलङ्कारसा-
कत्वाच्च न कथितपदत्वं दोषः । द्वितीये विकासरूपस्यार्थस्यावृ-
उन्मीलन्ति स्फुटन्तीति शब्दभेदेन तस्यैव बोधनात् । तृतीये तु
रावृत्तिः स्फुटैवेति ॥ उत्कण्ठयतीति । मेघानां माला पंक्तिः । क-
पिनां मयूराणां वर्गं समूहमुत्कण्ठयत्यूर्ध्वं कण्ठो यस्य तादृशं करो-
तथा मकरध्वजः कामो यूनां तरुणानां मानसमुत्कण्ठयत्युत्सुकं
तीत्यर्थभेदेपि शब्दावृत्तिः ॥ शमयतीति । जलधरस्य मेघस्य
पंक्तिश्चातकतरुणानां चिरकालमुपनतां प्राप्तां तृषं पिपासां शमय-
वधूलोचनयोर्जलधारा अश्रुपंक्तिश्च कामिनां प्रवासेच्छां क्षपयती
एव नाशरूपोर्थः शब्दभेदेनोक्त इत्यर्थावृत्तिः ॥ वदनेनेति । पा
जलानाम् । अत्र निलीयते शब्दस्य तदर्थस्य तिरोधानस्य चावृ
ननु प्रस्तुतार्थं सकृदुपात्तस्य प्रसङ्गादप्रस्तुतोपकारित्वे दीपकमि
न चावृत्तौ तत्सम्भवतीति कथमावृत्तिदीपकमुक्तमित्याशङ्क्याह
चेति । दीपस्थानीयशब्दार्थयोरावृत्तौ चेत्यर्थः ॥ प्रस्तुताप्रस्तुत
अम्बुदमालादीनां विरहोद्दीपकतया केवलप्रस्तुतत्वाच्चन्द्रबिम्बा
न्दयोश्च केवलाप्रस्तुतत्वादिति भावः ॥ दीपकच्छायेति । दीपक
दृश्येत्यर्थः । तच्च प्रस्तुताप्रस्तुतोपकारयोग्यत्वं वर्षतीत्यादौ श्लेष
नास्तीति भावः । मात्रपदेन दीपकात्पृथगेवायमलङ्कारो न तु
भेद इति सूचितम् । अत एव दण्डिना "अर्थावृत्तिः पदावृत्तिरुभ-
त्तिरित्यपि । दीपकस्थानमेवेष्टमलङ्कारत्रयं यथा ॥" इत्युक्त्वा विक-
न्तीत्याद्युदाहृतम् । दीपकस्थानं स्थानापन्नं सदृशमिति यावत् ॥ ४८॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामावृत्तिदी-
पकालङ्कारप्रकरणम् ॥ १६ ॥

---

## प्रतिवस्तूपमालङ्कारः १७.

**( चन्द्रा० )—वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता।**
**तापेन भ्राजते सूर्यः शूरश्चापेन राजते ॥ ५०॥**

**( कुव० )—यत्रोपमानोपमेयवाक्ययोरेकः समानो धर्म्मः पृथ-**
**ङ् निर्दिश्यते सा प्रतिवस्तूपमा । प्रतिवस्तु प्रतिवाक्य-**
**मुपमा समानधर्मोऽस्यामिति व्युत्पत्तेः । यथाऽत्रैव भ्राज-**
**राजत इत्येक एव धर्मं उपमानोपमेयवाक्ययोः पृथग्भि-**
**पदाभ्यां निर्दिष्टः ॥**

यथा वा—स्थिरा शैली गुणवतां खलबुद्ध्या न बाध्यते ।
रत्नदीपस्य हि शिखा वात्ययापि न नाश्यते ॥

यथा वा—तवामृतस्यन्दिनि पादपङ्कजे ।
निवेशितात्मा कथमन्यदिच्छति ॥
स्थितेऽरविन्दे मकरन्दनिर्भरे ।
मधुव्रतो नेक्षुरसं समीक्षते ॥

अत्र यद्यपि उपमेयवाक्ये अनिच्छा उपमानवाक्ये अवीक्षेति धर्मभेदः प्रतिभाति तथापि वीक्षणमात्रस्यावर्जनीयस्य प्रतिषेधानर्हत्वादिच्छापूर्वकवीक्षाप्रतिषेधोऽयमनिच्छापर्यवसित एवेति धर्मैक्यमनुसन्धेयम् । अर्थावृत्तिदीपकं प्रस्तुतानामप्रस्तुतानां वा, प्रतिवस्तूपमा तु प्रस्तुताप्रस्तुतानामिति विशेषः । आवृत्तिदीपकं वैधर्म्येण न सम्भवति प्रतिवस्तूपमा तु वैधर्म्येण दृश्यते ।

(अ०चं०)–सकृद्धर्मोक्तिप्रसङ्गादसकृत्तद्धर्मोक्तिगम्यवाक्यार्थसादृश्यकं प्रतिवस्तूपमालङ्कारं लक्षयति–वाक्ययोरिति ॥ द्विवचनमेकाभिप्रायं मालानुरोधादिति बोध्यम् । एकसामान्ये एकस्मिन्समानधर्मे सति । सूरः सूर्यः । लक्षणं व्याचष्टे–यत्रेति ॥ उपमानोपमेयेति भावप्रधानम् । उपमानोपमेयभावपरयोरित्यर्थः । पृथगिति भिन्नशब्देनेत्यर्थः । अयमेव च वस्तुप्रतिवस्तुभाव इत्युच्यते ॥ स्थिरेति । शैली सद्वृत्तम् । रत्नमेव दीपो रत्नदीपः । अत्र पूर्वार्द्धमुपमेयवाक्यमुत्तरार्द्धमुपमानवाक्यम् । उभयत्र च नाशाभावरूपः समानधर्मः शब्दभेदेनोपात्तः । सामान्याभावमात्रबोधकस्यापि बाधतेरत्र नाशरूपविशेषपरत्वात् । अयमेव च पूर्वोदाहरणाद्भेदः ॥ तवेति । ईश्वरं प्रति भक्तस्योक्तिः । अमृतप्रस्रवणशीले तव पादपङ्कजे निवेशित आत्माऽन्तःकरणं येन तादृशो भक्तोऽन्यदमृतातिरिक्तं फलं कथमिच्छति, न कथमपीत्यर्थः । अमृतं चात्र ब्रह्मानन्दरूपं हि निश्चितं मधुव्रतो भ्रमरो मकरन्देन रसेन निर्भरे व्याप्तेऽरविन्दे स्थिते सति इक्षुरसं न समीक्षत इत्युपमानवाक्यम् ॥ अवर्जनीयस्येति । अनिष्टेऽपि स्वसामग्रीवशाज्जायमानस्येत्यर्थः॥ इच्छापूर्वकेति । तथा च समीक्षतेरिच्छापूर्वकवीक्षणे लक्षणेति भावः ॥ अनिच्छापर्यवसित इति । सविशेषणे हीति न्यायादितिभावः । उन्मीलन्ति कदम्बानीति पूर्वोदाहृतायामर्थावृत्तावतिव्याप्तिमाशङ्क्याह–अर्थावृत्ति-

रित्यादि ॥ शब्दावृत्तौ तु धर्मस्यैकेनैव शब्देनावृत्त्या बोधनान्न
शब्दबोध्यत्वमिति नातिव्याप्तिरतोर्थावृत्तिपर्यन्तानुधावनम् ।
भिन्नशब्दबोध्यैकधर्मगम्यं प्रस्तुताप्रस्तुतवाक्यार्थसादृश्यं प्रतिव
मेति लक्षणं बोध्यम् । दृष्टान्तालङ्कारेऽतिव्याप्तिवारणाय भिन्नश
ध्येति । तत्र तु बिम्बप्रतिबिम्बभावापन्नधर्मगम्यं सादृश्यमिति
व्याप्तिः । "दिवि भाति यथा भानुस्तथा त्वं भ्राजसे भुवि " इत
वाक्यार्थोपमायामतिव्याप्तिवारणाय–गम्यमिति ॥ अर्थावृत्तिवार
प्रस्तुताप्रस्तुतेति ॥ "आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृ
भ्रमद्भ्रमरसङ्कीर्णं स्मरामि सरसीरुहम् " इति स्मरणालङ्कारेऽति
व्याप्तिवारणाय वाक्यार्थेति ॥ अत्र हि दिवि भातीति वाक्यार्थोपमायां
नाधिकरणशोभाश्रयभानुसदृशो भूम्यधिकरणकशोभाश्रयस्त्वं
प्रतीतिवन्न स्मर्यमाणतादृशसरोरुहसदृशं तथाविधमाननमिति प्र
येन वाक्यार्थगतोपमा गम्या स्यात्, किंतु स्मरणासंपृक्ता त
सरोरुहसदृशं तादृशमाननमिति पदार्थगतोपमैवेति तद्वारण
दिक् । प्रस्तुताप्रस्तुतयोश्चमत्कृतिविशेषाप्रयोजकतया वाऽलङ्का
प्रयोजकत्वमित्यस्वरसादाह–अयं चेति । वक्ष्यमाण इत्यर्थः ॥

( कुव० )-यथा–विद्वानेव विजानाति विद्वज्जनपरिश्रमम्
न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥
यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
न हि कस्तूरिकामोदः शपथेन विभाव्यते ॥५०॥

( अ०चं० )-विद्वानेवेति । यद्यप्यन्ययोगव्यवच्छेदार्थेनैवकारेणा
जानातीति पूर्ववाक्यार्थस्तस्य च न हि वन्ध्येत्युत्तरवाक्यार्थः स
तथापि रूपवत्येवाकाश इत्यादिप्रयोगवारणाय भावान्वयस्याप्य
कतया विद्वान् जानातीति वाक्यार्थस्याऽपि प्रतीतिस्तदभिप्रायेण
र्म्योदाहरणत्वं बोध्यम् । ननु वैधर्म्येणोपमेति व्याहतं तस्याः सा
रूपत्वादिति चेत्सत्यम् । वैधर्म्येणोपन्यस्तेन न हि वन्ध्येतिवा
नाक्षिप्तस्यापि तु प्रसविन्येव जानातीति वाक्यार्थस्योपमानत्वेन
क्षणान्मुखतो वैधर्म्यप्रतीतावपि साधर्म्य एव पर्यवसानान्न दो
वैधर्म्येणेत्यस्य च वैधर्म्यद्वारा इत्यर्थः ॥ यदि सन्तीति । एवकारो
क्रमः । स्वयमेव विकसन्ति प्रकाशन्त इत्यर्थः । अत्रापि गुणाः
प्रकाशन्त इति भावान्वयविधर्मा कस्तूरिकामोदः शपथेन न
इति वाक्यार्थस्तदाक्षिप्तेन किं तु स्वयमेव प्रकाशत इति वाक्
चौपम्यं गम्यमिति पूर्ववद्वैधर्म्योदाहरणत्वसङ्गतिः । यत्त्वत्र कै

द्धानेवेति पद्यं भवतु नाम कथंचिद्वैधर्म्योदाहरणं यदि सन्तीति न युक्तं वैधर्म्योदाहरणं हि प्रस्तुतधर्मिविशेषोपारूढार्थदार्ढ्याय क्षिप्तस्वव्यतिरेकसमानजातीयस्य धर्म्यन्तरारूढस्याप्रकृतार्थस्य थनम्। यथा—"वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः। न तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम्" इत्यादौ। अत्र सङ्गविशेषेण पूज्यते इति प्रस्तुतार्थाक्षिप्तस्य सङ्गविशेषेण विना न ज्यत इति स्वव्यतिरेकस्य सजातीयो न हि तुम्बीफलविकल इत्या- प्रकृतार्थो निबद्ध इति वैधर्म्योदाहरणत्वम्। यदि सन्तीत्यत्र तु स्वयं काशन्ते न परेणेत्यस्य प्रस्तुतस्यैव सजातीयोऽप्रकृतोर्थः। शपथेन विभाव्यते किं तु स्वयमेवेति प्रकृतार्थानुरूपतयैव पर्यवसानादिति। त्रेदं वक्तव्यम्। वंशभव इत्यादिभवदुदाहृतपद्येपि कथं वैधर्म्योदाह- णत्वम्। नहीत्यादेस्तुम्बीफलविकलो महिमानं न प्रयात्यपि तु युक्त इति प्रकृतार्थानुरूपतयैव पर्यवसानादिति। किं बहुना सर्व- व वैधर्म्योदाहरणे साधर्म्यपर्यवसानं विना नोपमानिर्वाह इति तदु- च्छेदप्रसङ्गः अथापातप्रतिपन्नेनाप्रकृतवाक्यार्थेन वैधर्म्यात्तदुदाहरणत्वं र्हि प्रकृतेपि तदस्तीति तुल्यम्। यदपि प्रस्तुतेत्यादि वैधर्म्योदाहरण- वनिर्वचनं तदयुक्तम् "भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थि- तां हि पांसवः" इतिवैधर्म्यदृष्टान्ताव्यापनात्। न ह्यत्र प्रस्तुतवा- क्यार्थः स्वव्यतिरेकमाक्षिपति किं त्वप्रकृतवाक्यार्थ एवेति दिक्॥५०॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां प्रतिवस्तूपमा- लङ्कारप्रकरणम्॥ १७॥

---

## दृष्टान्तालङ्कारः १८.

(चन्द्रा०)—चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः।
त्वमेव कीर्तिमान्राजन्विधुरेव हि कान्तिमान्॥५१॥

(कुव०)—यत्रोपमानोपमेयवाक्ययोर्भिन्नावेव धर्मौ बिम्बप्र- तिबिम्बभावेन निर्दिष्टौ तत्र दृष्टान्तः। त्वमेव कीर्ति- मानित्यत्र कीर्तिकान्त्योर्बिम्बप्रतिबिम्बभावः।

यथा वा—कामं नृपाः सन्ति सहस्रशोऽन्ये।
राजन्वतीमाहुरनेन भूमिम्॥

नक्षत्रताराग्रहसंकुलापि ।
ज्योतिष्मती चन्द्रमसैव रात्रिः ॥

( अ०चं० )--दृष्टान्तालङ्कारं लक्षयति-चेदिति ॥ वाक्ययोरित्यनु धर्मयोरित्यध्याहार्यम् । तदिति तदेत्यर्थकम् । अर्थतो व्याचष्टे-य यत्र काव्ये । तथा चोपमानोपमेयवाक्यार्थघटकधर्मयोर्बिम्बप्रतिबि वो दृष्टान्त इति लक्षणम् ॥ काममिति । अनेन प्रकृतराज राजन्वतीं शोभनराजवतीम् "राजन्वान्सौराज्ये" इति नि नक्षत्राण्यश्विन्यादीनि सप्तविंशतिः, तारास्तदितराः गोबलीवर्द ग्रहा भौमादयः, सङ्कुला व्याप्ता, ज्योतिष्मतीति प्राशस्त्ये मतु राजन्वतीज्योतिष्मतीत्यनयोर्बिम्बप्रतिबिम्बभावः पूर्वोदाहरणे न्त्योर्बिम्बप्रतिबिम्बभावप्रयोजकं मनोहारित्वरूपं सादृश्यमा राजज्योतिषोः प्राशस्त्यरूपं तच्छाब्दमिति भेदः ॥

(कु०) यथा वा-देवीं वाचमुपासते हि बहवः सारं तु सा
ज्ञानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ।
अब्धिर्लंघित एव वानरभटैः किं त्वस्य गम्भीर
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥

नन्वत्रोपमानोपमेयवाक्ययोर्ज्ञानमेक एव धर्म प्रतिवस्तूपमा युक्ता । नैवम् । अचेतने मन्थाचले बाधितत्वेन तत्र जानातीत्यनेन सागराधस्तलावधि र्शमात्रस्य विवक्षितत्वात् । अत्रोदाहरणे पदावृत्तिर्ब द्विशेषः पूर्ववत्प्रस्तुताप्रस्तुतविषयत्वकृतो द्रष्टव्यः र्येणाप्ययं दृश्यते ।

कृतं च गर्वाभिमुखं मनस्त्वया
किमन्यदेवं निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमा-
न्न यावदायात्युदयाद्रिमौलिताम् ॥ ५१ ॥

( अ०चं० )-देवीमिति । देवीं वाचं सरस्वतीं बहव उपासते हि एव । हिशब्दस्यैवकारार्थत्वात् । तु परं सरस्वतीसम्बन्धि प्रसिद्धो गुरुकुले क्लिष्टोऽध्ययनश्रमवान्मुरारिनामा कविर्नित

न जानीते। अत्र दृष्टान्तमाह–वानररूपैर्भटैर्योऽब्धिरब्धिर्लङ्घित किं त्वस्याऽब्धेर्गम्भीरतां पातालपर्यन्तमग्ना पीवरा स्थूला तस्यैवंविधो मन्थाचलो मन्दराद्रिरेव जानातीति। दृष्टान्तोहरणत्वासङ्गतिमाशङ्कते–नन्विति ॥ वाक्ययोरिति सप्तमी। एक– इत्यनन्तरं शब्दभेदेन निर्दिष्ट इति शेषः। सागरस्याधनो योऽवधिरिति गम्भीरतापदार्थकथनम्, संस्पर्शस्तु लक्षणया नात्यर्थ इति बोध्यम्। तथा च धर्मभेदात्र प्रतिवस्तूपमा किन्तु रस्वतसारज्ञानसागराधस्तलावधिसंस्पर्शयोर्बिम्बप्रतिबिम्बभावाद्दृन्तालङ्कार एवेत्याशयः। "वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्व।" इतिवत्पदावृत्तिदीपकं स्यादित्याशंक्य समाधत्ते–अत्रेति ॥ वदर्थावृत्तिप्रतिवस्तूपमयोरिव प्रस्तुताप्रस्तुतेति दृष्टान्तः प्रस्तुतातुतविषयः, पदावृत्तिस्तु तदन्यतरमात्रविषयेत्यर्थः। यद्यप्यत्रात्मदपरस्मैपदभेदेन पदभेदात्र पदावृत्तिशङ्कोचिता, तथापि पाठपरिवन पदाभेदेऽपि न पदावृत्तेरयं विषय इति बोधयितुमेतदुक्तम्। अयं ान्तः॥ कृतं चेति। नृपं प्रति मन्त्रिण उक्तिः। हे राजन् त्वया मनोगस्याभिमुखं न तु गर्वितं कृतं च। किमन्यदपेक्षितमिति शेषः। एवं त्रप्रयोगादिकं विना नोऽस्माकं द्विषः शत्रवो निहताश्च न तु निहष्यन्ते। अंशुमान् सूर्यो यावदुदयाद्रेर्मौलितां शिरोलङ्कारतां नायाति वदेव तमांसि तिष्ठन्ति तस्मिंस्तु तथाभूते न तिष्ठन्तीति दृष्टान्तः। त्र मनोगर्वाभिमुखीकरणवैरिहननयोरंशुमदुदयाचलमस्तकानागमनमःस्थित्योश्च यथाक्रमं वैधर्म्येण बिम्बप्रतिबिम्बभावः ॥ ५१ ॥

ङ्कारचन्द्रिकायां कुवलयानन्दटीकायां दृष्टान्तालङ्कारप्रकरणम्॥१८॥

---

## निदर्शनालंकारः १९.

**द्रा०)–वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना।**
**यद्दातुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता ॥ ५२ ॥**

**व०)–अत्र दातृपुरुषसौम्यत्वस्योपमेयवाक्यार्थस्य पूर्णेन्दोरकलङ्कत्वस्योपमानवाक्यार्थस्य यत्तद्भ्यामैक्यारोपः ॥**

**यथा वा–अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं**
**स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम्।**
**श्वपुच्छमवनामितं बधिरकर्णजापः कृतो**

धूर्तोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥

अत्राबुधजनसेवाया अरण्यरोदनादीनां यत्तदभ्यामै-
क्यारोपः ॥ ५२ ॥

(अ०चं०)–निदर्शनां लक्षयति–वाक्यार्थयोरिति ॥ सदृशवाक्यार्थद्वय-
य ऐक्यारोपः। उपमेयवाक्यार्थे उपमानवाक्यार्थाभेदारोप इति॥ तथा च
यद्दातुरिति। दातुः सौम्यतेति। यत इति सामान्ये नपुंसकम्। तदिति
विधेयाभिप्रायकं स्त्रीलिङ्गम् ॥ यत्तद्भ्यामिति । यद्यपि मुखं चन्द्र
वद्दातुः सौम्यता पूर्णेन्दोरकलङ्कतेत्येतावताप्यैक्यारोपः स
तथाऽपि यत्तद्भ्यां शीघ्रं स्फुटतया तदवगमात्तदुपन्यासः ॥ अत्र
अबुधो मूर्खो जनः सेवितः । यदिति गुणीभूतसेवनक्रियापर
उत्तरवाक्यगतेन यच्छब्देन तच्छब्दाक्षेपात् । तदरण्यरुदितं कृत-
द्यन्वयः । उद्वर्तनं यवगोधूमादिचूर्णेन मलापकर्षणम् । स्थले
प्रदेशे । अब्जं जलजम् । ऊषरे अङ्कुरायोग्यक्षारभूभागे । शुनः
श्वपुच्छमवनामितमृजुतासम्पादनाय नम्रीकृतम् । बधिरस्य क
एव जापः प्रलाप इत्यर्थः । अन्धस्य मुखे तत्सम्मुखं दर्पणो
इत्येवं निरर्थकत्वेन सदृशानामनेकेषां वाक्यार्थानामबुधजनसेवा-
कृतवाक्यार्थे ऐक्यारोपः पूर्वत्र त्वेकस्यैवैक्यारोप इति विशेषः ॥

(चन्द्रा०)–पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम् ।
त्वन्नेत्रयुगुलं धत्ते लीलां नीलाम्बुजन्मनोः ॥

( कुवल० )–अत्र नेत्रयुगुले नीलाम्बुजगतलीलापदार्थारोपो
निदर्शना ।

यथा वा–वियोगे गौडनारीणां यो गण्डतलपाण्डिमा ।
अदृश्यत स खर्जूरीमञ्जरीगर्भरेणुषु ॥

पूर्वस्मिन्नुदाहरणे उपमेये उपमानधर्मारोप इह तु
उपमेयधर्मारोप इति भेदः । उभयत्राप्यन्यधर्मस्यान्यत्रास-
म्भवेन तत्सदृशधर्माक्षेपादौपम्ये पर्यवसानं तुल्यम् ।
पदार्थवृत्तिनिदर्शना ललितोपमेति जयदेवेन व्याहृता ।

( अ०चं० )–निदर्शनान्तरमाह–पदार्थेति ॥ पदार्थवृत्तिं पदार्थसम्बन्धिनीम् ।
एके आलङ्कारिकाः । अन्यां पूर्वोक्तलक्षणाम् ॥ त्वन्नेत्रेति । लीलां
नीलाम्बुजन्मनोर्नीलोत्पलयोः ॥ वियोग इति । गौडदेशगतानां

योगे स्वकान्तवियोगकाले यो गण्डतले पाण्डिमा पाण्डुवर्णो भवति
खर्जूरीणां लतानां मञ्जरीगर्भस्थेषु रेणुष्वदृश्यत दृष्ट इत्यन्वयः । उप-
ते यथोक्तरेणुरूपे उपमेये उपमानधर्मारोप एव पदार्थनिदर्शनायाः
चीनैरुदाहरणात्कथमियं पदार्थनिदर्शनोच्यत इति शङ्कायामाह--
मयत्रेति ॥ उपमेये उपमानधर्मारोपे उपमाने उपमेयधर्मारोपे चेत्यर्थः ।
था चौपम्यपर्यवसायित्वस्यैव पदार्थनिदर्शनाजीवातुत्वेनारोपविषय-
ोपमेयत्वेन निवेशे प्रयोजनाभावादिहापि सा युक्तैवेति भावः ॥

०)--यद्यपि वियोगे गौडनारीणामिति श्लोकः प्राचीनैर्वा-
क्यार्थवृत्तिनिदर्शनायामुदाहृतस्तथापि विशिष्टयोर्धर्मयो-
रैक्यारोपो वाक्यार्थवृत्तिनिदर्शना । उपमानोपमेययोर-
न्यतरस्मिन्नन्यतरधर्मारोपः पदार्थवृत्तिनिदर्शनेति व्यव-
स्थामाश्रित्यास्माभिरिहोदाहृतः । एवं च

" त्वयि सति शिव दातर्यस्मदभ्यर्थिताना-
मितरमनुसरन्तो दर्शयन्तोऽर्थिमुद्राम् ।
चरमचरणपातैर्दुर्ग्रहं दोग्धुकामाः
करभमनुसरामः कामधेनौ स्थितायाम् ॥ १ ॥
दोर्भ्यामब्धिं तितीर्षन्तस्तुष्टुवुस्ते गुणार्णवम् ॥"

इत्यादिषु वाक्यभेदाऽभावेपि वाक्यार्थवृत्तिरेव
निदर्शना । विशिष्टयोरैक्यारोपसद्भावात् ॥

० लं० )--नन्वेवं सति वाक्यार्थनिदर्शनालक्षणस्यात्रातिव्याप्तिरित्या-
शङ्क्याशयवानाह--यद्यपीति ॥ वियोगकालीनगौडनारीगण्डतलपा-
ण्डिम्नः खर्जूरीमञ्जरीगर्भरेणुदृष्टपाण्डिम्नश्च यत्तद्भ्यामैक्यारोपसत्त्वा-
दिति भावः । अर्थविशेषविवक्षयातिव्याप्तिं परिहरन्नेव स्वाभिमतनिदर्श-
नाद्वयविषयविभागं दर्शयति--तथापीति ॥ विशिष्टयोर्बिम्बप्रतिबिम्बभा-
पन्नधर्मविशिष्टयोः । एवं च वाक्यार्थशब्देनैतादृशार्थविवक्षणाद्वियोग
इत्याद्युदाहरणे नातिव्याप्तिरिति भावः ॥ उपमानेत्यादि । एतच्च स्वरू-
पकथनम्, न त्वेवंरूपेण लक्षणे निवेशः, ताद्रूप्यरूपकातिव्याप्तिवारणा-
योपमाकल्पकत्वस्यारोपविशेषणस्यावश्यकत्वेनोपमाकल्पकस्तद्धर्मारो-
प इत्येतावत एव लक्षणस्य निर्दुष्टत्वात् । तदुक्तम्--" अभवन्वस्तु-
सम्बन्ध उपमापरिकल्पकः ।" इति । ताद्रूप्यरूपके तु ताद्रूप्यावच्छि-
न्नाभेद एव विवक्षितो न पुनरुपमेति तद्वारणम् । ननु त्वयि सतीत्याद्यु-

दाहरणे कापि निदर्शना न स्यादन्यधर्मस्यान्यत्रारोपात्, एकवा
वाक्यार्थभेदाभावाच्च । पदार्थवाक्यार्थनिदर्शनयोरसम्भवाशि
ङ्क्याह-एवं चेति ॥ उक्तव्यवस्थाश्रयणे चेत्यर्थः ॥ विशिष्टयो
बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टयोरित्यर्थः । तत्र ताव
भोः शिव अस्मदभ्यर्थितानां दातरि त्वयि सति इतरं क्षुद्रं प्रभुम्
न्तोर्थिनां मुद्रां चिह्नं दर्शयन्तो वयं कामधेनौ स्थितायां दोर्भ्यां
श्चरमयोः पाश्चात्त्ययोश्चरणयोः पातैः दुर्ग्रहं दुःखेन ग्राह्यं करभ
शुमनुसराम इत्यर्थके सकलकामदमहेश्वरकालीनक्षुद्रधनिका
कर्तुः कामधेनुस्थितिकालीनतथाविधकरभानुसरणकर्तुश्चैक्या
तत्रोपमानकोटिविशेषणयोः कामधेनुकरभयोरुपमेयकोटिविशे
महेश्वरक्षुद्रधनिकयोर्यथाक्रमं बिम्बप्रतिबिम्बभावो बोध्यः ।
सरणयोरपि । एवं दोर्भ्यामित्यत्राप्यब्धिगुणसमूहयोर्बिम्बप्रति
भावो बोध्यः ॥

( कुवल० )-वाक्यार्थयोः सदृशयोरिति लक्षणावयवे वा
र्थशब्देन बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टस्वरू
प्रस्तुताप्रस्तुतधर्मयोर्विवक्षितत्वादिति ।

एवं च-"राजसेवा मनुष्याणामसिधारावलेहनम् ।
पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम् ॥"

इत्यत्र प्रस्तुताप्रस्तुतवृत्तान्तयोरैकपदोपात्तत्वे वा
क्यार्थवृत्तिनिदर्शनाया न क्षतिः तयोर्बिम्बप्रति
भावापन्नवस्तुविशिष्टव्यवहाररूपत्वात । अत एव
र्शनाया रूपकाद्भेदः ।

( अ०चं० )-नन्वियं व्यवस्था मूलविरुद्धेत्याशङ्क्याह-वाक्यार्थयो
ननु वाक्यार्थशब्दस्यावान्तरवाक्यार्थसाधारणानेकपदार्थपरत्वे
दाहरणसङ्ग्रहसम्भवादेवंविधगुरुतरार्थपरत्वं न युक्तमित्यत आ
चेति ॥ एवंविधार्थविवक्षणे चेत्यर्थः । अवलेहनं जिह्वया घर्
पञ्चाननः सिंहस्तस्य परिष्वङ्ग आलिङ्गनम् । व्याली भुजङ्गी । अ
बलवदनिष्टजनकत्वं च साधारणो धर्मः । प्रस्तुतवृत्तान्तो राज
निदर्शनायास्तल्लक्षणस्य न क्षतिर्नाव्याप्तिः । तयोः प्रस्तुताप्रस्तु
न्तयोः । असिधारादिभिः समं राज्ञो बिम्बप्रतिबिम्बभावात्त
योश्चैक्यारोपादिति भावः । एवं तर्हि सदृशयोरैक्यारोप इत्येव

मस्त्वित्याशङ्क्याह–अत एवेति ॥ एतादृशविशेषणविवक्षणादेवेत्यर्थः । भेदो व्यावृत्तिः । तथा च तदभावे रूपकेऽतिप्रसङ्गः स्यादिति भावः ।

(कुव०)–रूपके ह्यविशिष्टयोरेव मुखचन्द्रादिकयोरैक्यारोपः ।

अङ्घ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे ।
विधिविष्टरपद्मस्य नालदण्डो मुदेऽस्तु वः ॥"

इति विशिष्टे रूपकोदाहरणेऽपि न बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टरूपता । विधिविष्टरकमलश्लिष्टत्वरूपसाधारणधर्मवत्तासम्पादनार्थमेव तद्विशेषणोपादानात् । यदाहुः सौम्यतेत्यादिनिदर्शनोदाहरणेषु दातृपूर्णेन्द्वादीनामानन्दकरत्वादिनेवात्र विशेषणयोर्बिम्बप्रतिबिम्बभावाभावात् । यत्र तु विषयिविशेषणानां परस्परसादृश्येन बिम्बप्रतिबिम्बभावोऽस्ति ।

(अ०चं०)–कथमनेन तद्वारणं तत्राह–रूपके हीति ॥ अविशिष्टयोर्बिम्बप्रतिबिम्बभावापन्नवस्त्वविशिष्टयोः । बिम्बप्रतिबिम्बभावापन्नेत्यस्य व्यावृत्तिं दर्शयति–अङ्घ्रिदण्ड इत्यादि ॥ बलेर्दैत्यविशेषस्य निग्रहे बन्धने कर्तव्ये ऊर्ध्वमुत्क्षिप्तो हरेरङ्घ्रिदण्डो वो युष्माकं मुदेऽस्त्विति सम्बन्धः । कीदृशः । विधेर्ब्रह्मणो विष्टर आसनं तद्रूपस्य पद्मस्य नालदण्ड इत्यर्थः ॥ विशिष्टरूपकेति । ऊर्ध्वोत्क्षिप्तत्वविशिष्टाङ्घ्रिदण्डविधिविष्टरपद्मसम्बन्धित्वविशिष्टनालदण्डसम्बन्धिरूपकेत्यर्थः ॥ विशेषणेति । ऊर्ध्वोत्क्षिप्तत्वरूपोपमेयविशेषणविधिविष्टरपद्मसम्बन्धित्वरूपोपमानविशेषणयोरित्यर्थः । एवकारसूचितबिम्बप्रतिबिम्बभावव्यतिरेकं स्फुटयति–यदाहुरिति ॥ अभावादिति । सादृश्याभावादिति भावः । रूपकविशेषेऽतिव्याप्तिमाशङ्क्य परिहरति–यत्र त्वित्यादिना ॥ यत्र त्वित्यस्य इति सावयवरूपकोदाहरणे इत्यग्रेतनेनान्वयः । विषयविषयिविशेषणानामारोपविषयारोप्यमाणसम्बन्धिनां विशेषणानाम् ॥

(कुव०)–"ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थीन्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥"

इति सावयवरूपकोदाहरणे तत्रापि विषयविषयिणोस्तद्विशेषाणां च प्रत्येकमेवैक्यारोपो न तु ज्योत्स्नादिविशिष्टरात्रिरूपविषयस्य भस्मादिविशिष्टकापालिकीरूपविषयिणश्च विशिष्टरूपेणैक्यारोपोस्तीति । तस्माद्राजसेवा मनुष्याणामित्यादावपि वाक्यार्थवृत्तिनिदर्शनैव युक्ता मतान्तरे त्विह पदार्थवृत्त्यैव निदर्शनया भाव्यमिति॥

( अ० चं० )–ज्योत्स्नेति । इयं रात्रिरेव कापालिकी योगिनी द्वीपान्तरं भ्रमतीत्यन्वयः । एतत्प्रधानरूपकम् । एतदङ्गभूतान्यवयवविशेषणैः प्रतिपाद्यन्ते । यथा ज्योत्स्नारूपेण भस्मना छुरणमङ्गलेपनं तेन धवला तारकारूपाण्यस्थीनि बिभ्रती अन्तर्धानस्य व्यसने कौतुके रसिका चन्द्ररूपे मुद्राकपाले न्यस्तं लाञ्छनस्य छलेन सिद्धाञ्जनस्य परिमलं चूर्णं दधती धारयन्ती दीक्षाकालगृहीतोपकरणेषु मुद्रेति नाम्ना पाखण्डानां व्यवहार इति चण्डीदासः । मुद्रापरिमलशब्दौ प्रशंसार्थावित्यन्ये । मुद्रा चिह्नं तद्रूपे कपाले इति वार्थः । विषयविषयिणो रात्रिकापालिक्योः । तद्विशेषणानां तत्सम्बन्धिनां ज्योत्स्नाभस्मादीनां यथाश्रुते रात्रिकापालिकीति समासस्योत्तरपदार्थप्रधानत्वेन ज्योत्स्नादीनां रात्रिविशेषणत्वाभावादसंगतेः ॥ प्रत्येकमेवेति । शुद्धरूपेणैवेत्यर्थः ॥ न त्विति । उक्तयुक्त्या विशेषणत्वाभावादिति भावः । वस्तुतो भस्मादेः कापालिकीं प्रत्यपि न विशेषणत्वमपि तु तत्तदवयवनिविष्टत्वमेवेत्यपि बोध्यम् । वाक्यार्थशब्दस्य बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टार्थपरत्वमङ्गीकृत्य राजसेवेत्युदाहरणे वाक्यार्थवृत्तिनिदर्शनात्वमुक्तमुपसंहरति–तस्मादिति ॥ उक्तलक्षणस्य व्यवस्थितत्वादित्यर्थः ॥ मतान्तरे त्विति । सदृशयोर्वाक्यार्थयोरैक्यारोप इति यथाश्रुतलक्षणाङ्गीकर्तृमत इत्यर्थः । इह राजसेवेत्युदाहरणे पदार्थवृत्त्यैव उपमाकल्पक एकपदार्थे अपरपदार्थतद्धर्मान्यतरारोप इति तल्लक्षणस्य तदभिमतत्वादिति भावः ॥ ५३ ॥

(चन्द्रा०)–अपरां बोधनं प्राहुः क्रियया ऽसत्सदर्थयोः ।
नश्येद्राजविरोधीति क्षीणं चन्द्रोदये तमः ॥ ५४ ॥
उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् ।
विभावयन्समृद्धीनां फलं सुहृदनुग्रहः ॥ ५५ ॥

कुव० )–कस्यचित् किंचित्क्रियाविशिष्टस्य स्वक्रियया परान्प्रत्यसतः सतो वार्थस्य बोधनं यन्निबध्यते तदपरां निदर्शनामाहुः । असदर्थबोधने उत्तरार्द्धमुदाहरणम् । तत्र नश्येदिति बोधयदिति वक्तव्ये बोधयदित्यस्य गम्यमानत्वादप्रयोगः । ततश्च राज्ञा चन्द्रेण सह विरुध्य स्वयं नाशक्रियया विशिष्टं तमः स्वकीयनाशक्रियया दृष्टान्तभूतया अन्योऽप्येवं राजविरुद्धश्चेन्नश्येदित्यनिष्टपर्यवसायिनमर्थं बोधयदेव नष्टमिति निबन्धनादसदर्थनिदर्शना । तथा उत्तरश्लोके सविता स्वोदयसमय एव पद्मेषु लक्ष्मीमादधानः स्वया पद्मलक्ष्म्याधानक्रियया परान्प्रति समृद्धीनां फलं सुहृदनुग्रह एवेति श्रेयस्करमर्थं बोधयन्निबद्ध इति सदर्थनिदर्शना ॥

०चं०)–निदर्शनान्तरमाह–अपरामिति । पूर्वविलक्षणामित्यर्थः । निदर्शनामित्यनुषज्यते । क्रियया ऽसत्सदर्थयोर्बोधनमपरां निदर्शनां प्राहुरिति सम्बन्धः । सदसदर्थयोरिति वक्तव्येऽपि छन्दोऽनुरोधादित्थमभिधानम् । "समुद्राभ्राद् घः" इत्यादिसौत्रनिर्देशेन पूर्वनिपातविधेरनित्यत्वज्ञापनात् । लक्षणं व्याचष्टे–कस्यचिदीति ॥ अत्रासतः सतो वेति विभागकथनं न तु लक्षणान्तर्गतम् । उदासीनार्थबोधने चमत्कारित्वाभावेनैवानतिप्रसङ्गात् । स्वक्रियया सहकारिभूतया क्रियाविशिष्टस्य वस्तुनः सम्बन्ध्यर्थस्य बोधनं बोधानुकूलो व्यापारो यन्निबध्यते वर्ण्यते सा निदर्शनेति लक्षणम् । अथ "निवातपद्मोदरसोदराभ्यां विलोचनाभ्यामवलोकयन्ती । न केवलं यूनि मनोभवेऽपि व्यनक्ति कंचित्तपसः प्रभावम् ॥" इत्यादावतिव्याप्तिः । अवलोकनक्रियाविशिष्टया कामिन्या तपःप्रभावबोधनस्य वर्णनादिति चेन्न, क्रिययेत्यनेन दृष्टान्तविधया बोधनस्य विवक्षितत्वात् । उक्तोदाहरणे च लिङ्गविधया बोधकत्वेन तदभावात् । इत्थं च दृष्टान्ततया क्रियाविशिष्टस्यार्थबोधकत्वं वर्ण्यमानं निदर्शनेति पर्यवसितम् । नश्येदित्यत्र बोधनस्यावर्णनात्कथमुदाहरणत्वमत आह–तत्रेति ॥ उदाहरण इत्यर्थः । लक्ष्ये लक्षणं सङ्गमयति–ततश्चेति । बोधनस्य गम्यमानत्वाच्चेत्यर्थः ॥ दृष्टान्तभूतयेति । दृष्टान्तेष्वस्मिन्भूतया विद्यमानयेत्यर्थः । दृष्टान्तो भूतः सञ्जातो ययेति वा । एवं तमोवत् चन्द्रस्यापि राजत्वं "सोमो वै ब्राह्मणानां राजा"

इत्यादिश्रुतिप्रसिद्धम् । अनिष्टपर्यवसायिनमर्थं नाशरूपानिष्ट राजविरुद्धत्वरूपमर्थम् ।

( कुव० )-यथा वा-उन्नतं पदमवाप्य यो लघु-
हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतः पृषद्गण-
श्चारुमारुतधुतः पतत्यधः ॥

अत्र गिरिशेखरगतो वृष्टिबिन्दुगणो मन्दमारुतेनापि कम्पितः पतन् लघोरुन्नतपदप्राप्तिः पतनहेतुरिति सदर्थं बोधयन्निबद्ध इत्यसदर्थनिदर्शना ॥

( अ०चं० )-उन्नतमिति ॥ यो लघुरल्पबुद्धिरल्पपरिमाणश्च स उन्नतं पदमुत्कर्षमुच्चस्थानं चावाप्य हेलयैव पतेदिति ब्रुवन् कथयन् शैलशेखरगतो गिरिमस्तकवर्ती पृषद्गणो जलबिन्दुसमूहश्चारुणा मन्देनापि मारुतेन धुतः कम्पितोऽधः पतत्युत्कर्षाद्धीयते अधोदेशे च पतति । धुवमिति पाठे बोधनस्य पूर्ववद्गम्यमानत्वादप्रयोगः । दृषत्कण पाठे पाषाणकण इत्यर्थः ॥

( कुव० )-चूडामणिपदे धत्ते यो देवं रविमागतम् ।
सतां कार्यातिथेयीति बोधयन्गृहमेधिनः ॥

अत्र समागतं रविं शिरसा सम्भावयन्नुदयाचलः स्वचेष्टया रविधारणक्रियया समागतानां सतामेवं गृहमेधिभिरातिथ्यं कार्यमिति सदर्थं बोधयन्निबद्ध इति सदर्थनिदर्शना । अत्र केचित् वाक्यार्थवृत्तिपदार्थवृत्तिनिदर्शनाद्वयमसम्भवद्वस्तुसम्बन्धनिबन्धनमिति, तृतीया तु सम्भवद्वस्तुसम्बन्धनिबन्धनेति च व्यवहरन्ति । तथा हि आद्यनिदर्शनायां वाक्यार्थयोरैक्यमसम्भवत्तयोः साम्ये पर्यवस्यति । द्वितीयनिदर्शनायामप्यन्यधर्मोऽन्यत्रासम्भवन्धर्मिणोः साम्ये पर्यवस्यति । तृतीयनिदर्शनायां तु स्वक्रियया परान्प्रति सदसदर्थबोधनं सम्भवदेव साम्यं गर्भीकरोति । बोधयन् गृहमेधिन इत्यादौ हि कार्य

ग्निरध्यापयतीतिवत्समर्थाचरणे णिचः प्रयोगः। ततश्च यथा कारीषोग्निः शीतापनयनेन बहूनध्ययनसमर्थान्करोति एवं वर्ण्यमानः पर्वतः स्वयमुपमानभावेन गृहमेधिन उक्तबोधनसमर्थान्कर्तुं क्षमते। यथायं पर्वतः समागतं रविं शिरसा सम्भावयत्येवं गृहमेधी समागतं सन्तमुचितपूजया सम्भावयेदित्यतः सम्भवति बोधनसम्बन्ध इति ॥ ५४ ॥ ५५ ॥

अ०चं० )–चूडेति ॥ उदयाचल आगतं देवं रविं चूडामणेः पदे स्थाने मस्तके धत्ते धारयति। किं कुर्वन्। गृहमेधिनो गृहस्थान्सतामातिथेयी कार्येति बोधयन्। आतिथेयी आतिथ्यम्। अत्र उक्तनिदर्शनात्रयविषये केचिदित्यस्येति व्यवहरन्तीत्यनेनान्वयः ॥ धर्मिणोरिति। धर्मयोः साम्यमात्रेण चमत्कारानिष्पत्तेस्तत्कृतबिम्बप्रतिबिम्बभावेन धर्मिणोः साम्यावगतिरिति भावः ॥ गर्भीकरोतीति। स्वविशेषणत्वेन स्वीकरोतीत्यर्थः। दृष्टान्ततया बोधनस्यैव तत्र विवक्षितत्वात्। एतदेवोपपादयति–बोधयन्नित्यादिना ॥ करीषं शुष्कगोमयं तस्यायं कारीषः। समर्थाचरणे समर्थकरणे। सामर्थ्योत्पादन इति यावत्। भावप्राधान्यात्। उपमानभावेन दृष्टान्तत्वेन। एवं प्रदर्शिते निदर्शनात्रये निदर्शनापदप्रवृत्तिनिमित्तस्यैकस्याभावान्नानार्थ एव निदर्शनाशब्द इति बोध्यम् ॥ ५४ ॥ ५५ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानंदटीकायां निदर्शनालङ्कारप्रकरणम् ॥ १९ ॥

## व्यतिरेकालङ्कारः २०.

चन्द्रा० )–व्यतिरेको विशेषश्चेदुपमानोपमेययोः।
शैला इवोन्नताः सन्तः किन्तु प्रकृतिकोमलाः ॥ ५६ ॥

( कुव० )–अयमुपमेयाधिक्यपर्यवसायी व्यतिरेकः।

यथा वा–पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर।
भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते ॥

अ०चं० )–व्यतिरेकं लक्षयति–व्यतिरेक इति ॥ विशेषो वैलक्षण्यम्। उपमेयस्याधिक्यमुत्कर्षः ॥ पल्लवत इति पञ्चम्यर्थे तसिल्। कल्पतरोः पल्लवतः पल्लवादेष वक्ष्यमाणस्ते तव करस्य विशेष इति सम्ब-

न्धः । एकः पल्लवः परो हस्तः कर्णं राधेयं तिरस्कुरुते । दानाति... नेति भावः । अत्रोपमेयस्य करस्योत्कर्षः । पूर्वोदाहरणे उन्नतत्वेनौ... शाब्दमिह तु रक्तवत्कोमलादिप्रयुक्तं तद्रस्यमिति भेदः ॥

(कुव०)-तन्न्यूनत्वपर्यवसायी यथा-

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्तास्तथा माम...
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥

अनुभयपर्यवसायी यथा-

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥...

(अ० चं०)-तन्न्यूनत्वेति । उपमेयन्यूनत्वेत्यर्थः ॥ रक्तस्त्वमिति । अ... कवृक्षं प्रति विरहिणः कस्यचिदुक्तिः । हे अशोक आवयोः सर्वं... समानम्, अहं केवलं धात्रा विधात्रा सशोकः शोकसहितः कृतः... तु शोकरहित इत्यशोकपदश्लेषादवगम्यते । किं तत्सर्वं समानं तत्र... रक्त इत्यादि । त्वं नूतनैः पल्लवैः रक्तो रक्तवर्णः अहमपि प्रियायाः... घनीयैर्गुणैः सौन्दर्यादिभी रक्तोऽनुरक्तः । अर्थात्प्रियायाम् । हे सखे... प्रति शिलीमुखा भ्रमरा आयान्ति मां प्रत्यपि स्मरेण धनुषा मु... प्रेरिताः शिलीमुखा बाणा आयान्ति । एवं कान्तायाः पादतलस्य... तो यथा तव मुदे सन्तोषाय तद्वत्तथा ममापि सन्तोषायेत्यर्थः । का... नीपादघातेनाशोकस्य पुष्पोद्गम इति कविप्रसिद्धिः । अत्रोपमे... सशोकत्वेनापकर्षः ॥ अनुभयपर्यवसायी उपमेयोत्कर्षापकर्षान्यतर... वसानरहितः ॥ दृढतरेति । कृपणस्य कृपाणस्य खड्गस्य चाका... दीर्घाद्वर्णादाकृतेश्च केवलं भेदो वैलक्षण्यम् । प्रकारान्तरेण तु सा... मेवेत्यर्थः । कथं तत्राह-दृढतरेत्यादि । दृढतरं निबद्धो मु... नेति । कृपणपक्षे धनव्ययवैमुख्येन मुष्टिमोचनाभावात् । खड्गपक्षे... दृढतरं निबद्धः सम्बद्धो मुष्टिर्मुष्टिग्राह्यभागो यस्येत्यर्थः । कोशो... ण्डारगृहं तत्र निषण्ण उपविष्टः कृपणः । कोशे पिधानके निष... स्थित इति खड्गपक्षे । सहजमलिनः स्वभावमलिनः, मलिनवेषत्वा... पणः । खड्गस्तु कृष्णवर्णत्वादिति । एवं च किञ्चिद्धर्मप्रयुक्तसाम्ये... तया प्रतीयमानयोः किञ्चिद्धर्मप्रयुक्तवैलक्षण्यं व्यतिरेकशरीरम् । वै... क्षण्यं तु क्वचिदुपमेयस्योत्कर्षे क्वचिच्च तदपकर्षे पर्यवसन्नं क्वचित्तु...

न्यतरपर्यवसानविरहेपि स्ववैचित्र्यविश्रान्तमात्रमिति बोध्यम् । एतेन चरमभेदद्वयतदुदाहरणदूषणं कस्यचिदापातरमणीयमिव भासमानं प्रत्युक्तं वेदितव्यम् । अत्यन्तासारतया तु नानुवादमर्हतीत्युपरम्यते।५६॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां व्यतिरेकालङ्कारप्रकरणम् ॥ २० ॥

---

## सहोक्त्यलङ्कारः २१.

(चन्द्रा०)–सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः ।
दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिः सह ॥५७॥

(कुव० )–यथा वा–

छाया संश्रयते तलं विटपिनां श्रान्तेव पान्थैः समं
मूलं याति सरोजलस्य जडता ग्लानेव मीनैः सह ।
आचामत्यहिमांशुदीधितिरपस्तप्तेव लोकैः समं
निद्रा गर्भगृहं सह प्रविशति क्लान्तेव कान्ताजनैः ॥

जनरञ्जन इत्युक्तेरनेन सार्द्धं विहराम्बुराशेरित्यादौ न सहोक्तिरलङ्कारः ॥ ५७ ॥

(अ० चं० )–सहोक्तिरिति लक्ष्यनिर्देशः । सहभाव इत्यादि लक्षणम् । सहभावः साहित्यम् । जनरञ्जनः सहृदयजनाह्लादकः । एवं च चमत्कृतिजनकं साहित्यं सहोक्तिरिति लक्षणम् ॥ दिगन्तमिति । तस्य राज्ञः कीर्तिः प्रत्यर्थिभिः शत्रुभिः सह दिगन्तमगमदित्यन्वयः । अत्र च तृतीयाया निरूपितत्वार्थकतया प्रत्यर्थिनिरूपितसाहित्यवती कीर्तिर्गमनाश्रय इति बोधे एकधर्मान्वयित्वरूपसाहित्यबलात्प्रत्यर्थिनामपि गमनान्वयप्रतीतिः । तदुक्तम्–"सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ।" इति ॥ छायेति । ग्रीष्मर्तौ मध्याह्नवर्णनमिदम् । छाया पान्थैरध्वगैः समं सार्द्धं विटपिनां तरूणां तलं मूलप्रदेशं संश्रयते । कुत इत्याकांक्षायामुत्प्रेक्षते–श्रान्तेवेति ॥ श्रमश्चात्रातपातिशयकृतो बोध्यः । एवमग्रेऽपि । जडता शीतलता ग्लानेव सरोजलस्य मूलमधोदेशं मीनैर्मत्स्यैः सह याति गच्छति । ग्लानिर्बलापचयः । तथा अहिमा उष्णा अंशवः करा यस्यैवंभूतस्य रवेर्दीधितिस्तप्तेव सन्तप्तेव सती लोकैः सममपः जलानि आचामति पिबति । 'दीधितिः स्त्रियाम्' इत्यमरः । निद्रा क्लान्तेव सती कान्ताजनैः सह गर्भगृहमभ्यन्तरगृहं प्रविशति । तत्रैव तदु-

द्रवात् । क्रान्तिस्तेजोहानिः । सौकुमार्यातिशयेन तत्सौलभ्यात्का- पादानम् ॥ इत्यादाविति । इन्दुमतीस्वयंवरे रघुवंशे "अनेन स- विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु । द्वीपान्तरानीतलवङ्गपुष्पै- कृतस्वेदलवा मरुद्भिः" इति पद्यम् । अत्र सहोक्तिचमत्कारित्वा- लङ्काररूपेत्यर्थः ॥ ५७ ॥

इत्यलङ्कारचंद्रिकायां कुवलयानन्दटीकायां सहोक्त्यलङ्कार- प्रकरणम् ॥ २१ ॥

---

## विनोक्त्यलंकारः २२.

(चन्द्रा०)-विनोक्तिश्चेद्विना किञ्चित्प्रस्तुतं हीनमुच्य- विद्या हृद्याऽपि साऽवद्या विना विनयसम्पदम् ॥५८

(कुव०)-यथा वा-यश्च रामं न पश्येत्तु यं च रामो न पश्या-

निन्दितः स भवेल्लोके स्वात्माप्येनं विगर्हते

अत्र च रामदर्शनं विना हीनत्वं विनाशब्दमन्तरे- दर्शितम् ॥ ५८ ॥

( अ०चं० )-विनोक्तिरिति ॥ किञ्चिद्विना प्रस्तुतं वर्ण्यहीनं दुष्टमु- चेत्तदा विनोक्तिनामालङ्कार इत्यर्थः ॥ विद्येति । विनयसम्पत्तिं- या विद्या सा हृद्या मनोहरापि दुष्टेत्यन्वयः । अत्र प्रस्तुताया वि- या विनयं विना दुष्टत्वमुक्तम् ॥ यश्चेति । यः पुरुषः । स्वात्मा स्वा- करणम् । विगर्हते निन्दति ॥ रामदर्शनं विनेति । रामकर्मकं रामक- च दर्शनं विनेत्यर्थः ॥ अन्तरेणापीति । विनापीत्यर्थः । तथा च वि- क्तिग्रहणं न तु शब्दग्रहणमिति भावः ॥ ५८ ॥

(चंद्रा०)तच्चेत्किञ्चिद्विना रम्यं विनोक्तिः सापि कथ्य- विना खलैर्विभात्येषा राजेन्द्र भवतः सभा ॥५९

( कुव० )-यथा वा-

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गारोधःपतनकलुषा गृह्णतीव प्रसादम् ॥

अत्र तमःप्रभृतीन्विना निशादीनां रम्यत्वं विनाशब्द-मन्तरेण दर्शितम् ॥ ५९ ॥

(अ० चं० )-प्रकारान्तरमाह-तच्चेदिति ॥ तत्प्रस्तुतं किञ्चिद्विना रम्यं चेत्सापि विनोक्तिः कथ्यत इत्यन्वयः । इत्थं च किञ्चिद्व्यतिरेकेण प्रस्तुतस्य रम्यत्वारम्यत्वान्यतरवर्णनं विनोक्तिरिति प्रकारद्वयसाधारणं सामान्यलक्षणं बोध्यम् । यत्तु हृद्यो विनार्थसम्बन्ध एव विनोक्तिः । हृद्यत्वं च विनाकृतस्य वस्तुनो रमणीयत्वारमणीयत्वाभ्यां भवतीत्यर्वाचीनैरुक्तम् । तदयुक्तम् । कारणं विना कार्योत्पत्तिकथनरूपे विभावनालङ्कारेऽतिव्याप्तेर्वारणाय विनार्थसम्बन्धप्रयुक्तप्रस्तुतगतरमणीयत्वादेरपि लक्षणे निवेशस्यावश्यकत्वादिति ॥ आविर्भूत इति । मानवतीविषये नायकस्य परामर्शोऽयम् । इयं वरतनुरन्तः अन्तःकरणे मोहेन मानावेशेन मुक्तकलपा ईषन्न्यूनमुक्ता लक्ष्यते । केव । पूर्वं रोधसस्तटस्य पतनेन कलुषा अनन्तरं कालुष्यापगमात्प्रसादं नैर्मल्यं गृह्णत्याश्रयन्ती गङ्गेव । तथा शशिनि चन्द्रे आविर्भूते उदिते सति तमसा मुच्यमाना रात्रिरिव । एवं छिन्नो नष्टो भूयिष्ठो धूमो यस्या एवंभूता । निशि भवस्य हुतभुजो वह्नेरर्चिः शिखेवेति ॥ दर्शितमिति । अर्थतो बोधितमित्यर्थः ॥ ५९ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां विनोक्त्यलङ्कारप्रकरणम् २२॥

---

## समासोक्त्यलंकारः २३.

(चं० )-समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।
अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥६०॥

(कुव० )-अत्र प्रस्तुतवृत्तान्ते वर्ण्यमाने विशेषणसाम्यबलादप्रस्तुतवृत्तान्तस्यापि परिस्फूर्तिस्तत्र समासोक्तिरलङ्कारः । समासेन सङ्क्षेपेण प्रस्तुताप्रस्तुतवृत्तान्तयोर्वचनात् । उदाहरणम्-अयमैन्द्रीति ॥ अत्र हि चन्द्रस्य प्राचीप्रारम्भलक्षणमुखसम्बन्धलक्षणे उदये वर्ण्यमाने मुखशब्दस्य प्रारम्भवदनसाधारण्याद्रक्तशब्दस्यारुणकामुकसाधारण्याच्चुम्बतीत्यस्य प्रस्तुतार्थसम्बन्धमात्रपरस्य शक्यार्थान्तरसाधारण्याच्चन्द्रमःशब्दगतपुँल्लिङ्गेन ऐन्द्रीशब्दगत-

स्त्रीलिङ्गेन तत्प्रतिपाद्येन्द्रसम्बन्धित्वेन चोपस्कृत
प्रस्तुतपरवनितासक्तपुरुषवृत्तान्तः प्रतीयते ।

(अ०चं०)-समासोक्तिं लक्षयति-समासोक्तिरिति ॥ प्रस्तुते वर्ण्य
अप्रस्तुतस्याप्रस्तुतवृत्तान्तस्य परिस्फूर्तिश्चेत्तदा समासोक्तिरियम्
अयमिति । इन्द्रस्येयमैन्द्री प्राची । मुखमादिभागो वदनं च । रक्तो
वर्णोऽनुरक्तश्च । चुम्बनं सम्बन्धो वक्त्रसंयोगविशेषश्च । यथा
क्षणस्य वक्ष्यमाणे "असावुदयमारूढः कान्तिमान्रक्तमण्डल
राजा हरति सर्वस्य हृदयं मृदुलैः करैः ॥" इत्यादिप्रकृताप्रकृत
ऽतिव्याप्तेराह-विशेषणसाम्यबलादिति । विशेषणमात्रसाम्यबल
त्यर्थः । एवं च विशेषणमात्रसाम्यगम्याप्रस्तुतवृत्तान्तत्वं लक्षणं
ध्यम् । उदाहृतश्लेषे चाप्रकृतरूपवृत्तान्तस्य विशेष्यवाचिनाश्लिष्ट
जपदेनाप्यवगमान्नातिव्याप्तिः । संज्ञाप्रवृत्तिनिमित्तमवयवार्थं
यति-समासेनेति ॥ वचनात्प्रतिपादनात् । लक्ष्ये लक्षणं सङ्गम
अत्रेति ॥ प्रारम्भ आदिभागः । साधारण्याच्छ्लिष्टत्वात् । यद्यपि
तीत्यत्र न श्लेषस्तथाप्यर्थद्वयबोधकत्वमात्रेण तस्य साधारण्यो
उपस्कृतादिति साधारण्यादित्यस्य विशेषणम् । तत्र चन्द्रमः
गतेन पुँल्लिङ्गेन नायकत्वाभिव्यक्त्या ऐन्द्रीति स्वरूपपरं तद्गतेन स्त्री
ङ्गेन तदर्थस्य नायिकात्वाभिव्यक्त्या ऐन्द्रीशब्दप्रतिपाद्येनेन्द्र
न्धित्वेन च परकीयत्वाभिव्यक्त्येति बोध्यम् । वृत्तान्तो व्य
मुखचुम्बनरूपः ॥

( कुव० )-व्यावल्गत्कुचभारमाकुलकचं व्यालोलहारा
प्रेङ्खत्कुण्डलशोभिगण्डयुगलं प्रस्वेदि वक्त्राम्बुज
शश्वद्दत्तकरप्रहारमधिकश्वासं रसादेतया
यस्मात्कन्दुक सादरं सुभगया संसेव्यसे तत्कृत

अत्र कन्दुकवृत्तान्ते वर्ण्यमाने व्यावल्गत्कुचभा
त्यादिक्रियाविशेषणसाम्याद्विपरीतरतासक्तनायिकावृ
न्तः प्रतीयते । पूर्वत्र विशेषणानि श्लिष्टानि
साधारणानीति भेदः । सारूप्यादपि समासोक्तिर्दृश्

( अ०चं० )-व्यावल्गदिति ॥ नायिकानुरक्तस्य कस्यचित्क्रीडा
कन्दुकं प्रत्युक्तिरियम् । हे कन्दुक सुभगया सुन्दर्या एतया नायि
रसात्प्रीतिविशेषात्सादरसादरसहितं यथा स्यात्तथा यस्मात्सं

तस्मात्कृती धन्योसीत्यन्वयः । कथमित्याकांक्षायां संसेवनक्रियां विशिनष्टि-व्यावल्गदित्यादिना ॥ व्यावल्गन्विशेषत आसमन्ताच्चलन्कुचभारो यत्र तथा आकुलाः क्रीडावेशेनेतस्ततः पर्यस्ताः कचाः केशा यत्र एवं व्यालोला दोलायिता हारावलिर्यत्र तथा प्रेंखद्भ्यां चञ्चलाभ्यां कुण्डलाभ्यां शोभायुक्तं गण्डयुगलं यत्र एवं प्रस्वेदयुक्तं वक्त्राम्बुजं यत्र शश्वन्निरन्तरं दत्तः करेण प्रहारो यत्र तथा अधिकः श्वासो यत्र तथेति । वृत्तान्तः विपरीतरतरूपः । अत्रापि कन्दुकशब्दगतपुँल्लिङ्गेन नायकत्वाभिव्यक्तिर्बोध्या ॥ श्लिष्टानीति । श्लेषमूलकाभेदाध्यवसायविषयाणीत्यर्थः ॥ साधारणानीति । श्लेषं विनैव प्रकृताप्रकृतवृत्तान्तयोरनुगतानीत्यर्थः । यथा च लक्षणे साम्यशब्देन श्लेषकृतं स्वारसिकं च साम्यं विवक्षितमिति भावः । सारूप्यात्सादृश्यात् ॥

**(का० ) यथा वा—पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां**
**विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।**
**बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं**
**निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥**

**अत्र वनवर्णने प्रस्तुते तत्सारूप्यात्कुटुम्बिषु धनसन्तानादिसमृद्ध्यसमृद्धिविपर्यासं प्राप्तस्य तत्समाश्रयस्य ग्रामनगरादेर्वृत्तान्तः प्रतीयते ।**

(अ०चं० )-पुरेति ॥ उत्तररामचरिते सीतात्यागानन्तरं कदाचिद्वनं प्रति गतस्य भगवतो रामचन्द्रस्येयमुक्तिः । पुरा वनवासकाले सरितां नदीनां स्रोतः प्रवाहो यत्र प्रदेशे आसीत्तत्राधुना पुलिनमस्तीति शेषः। तथा क्षितिरुहां तरूणां घनविरलभावो विपर्यासं वैपरीत्यं यातः प्राप्तः । सान्द्राणां विरलता विरलानां शाखापल्लवादिवृद्ध्या सान्द्रता जातेत्यर्थः। तथा च बहोर्भूयसः कालादनन्तरं दृष्टमिदं वनमपरमन्यदिव मन्ये । परन्तु शैलानां पर्वतानां निवेशो विन्यासविशेषस्तदेवेदं वनमिति बुद्धिं प्रत्यभिज्ञारूपां द्रढयति दृढीकरोतीत्यर्थः ॥ तत्सारूप्यादिति । वनसादृश्यादित्यर्थः । ग्रामादौ किं वनसादृश्यमित्याकांक्षायां तद्गर्भं विशेषणमाह-कुटुम्बिष्वित्यादि ॥ कुटुम्बिषु कुटुम्बिगतो यो धनसमृद्ध्यसमृद्ध्योर्विपर्यासस्तं प्राप्तस्येत्यर्थः । तत्समाश्रयस्य तादृशकुटुम्बिसमाश्रयस्य । तथा च समृद्ध्यसमृद्धिविपर्यासवदाश्रयत्वं सादृश्यमिति भावः । किमस्य सादृश्यस्योत्थापकमिति चेत्-घनविरलेति, विपर्यासमिति च । ताभ्यामुक्तसादृश्यगर्भीकर-

णात् । एतेनैषा सादृश्यगर्भविशेषणोपस्थापितसादृश्यमूला समा- रिति मूलग्रन्थानवबोधस्तद्विरोधश्चेति दूषणमलग्नकं वेदितव्यम् । न्त्राप्रस्तुतवृत्तान्तस्य विशेषणसाम्यगम्यत्वाभावादुक्तलक्षणस्या- रिति चेन्न, विशेषणसाम्यगम्यसादृश्यगम्यत्वेऽपि विशेषसाम्यग- नपायात । प्राधान्यात्तु परं सारूप्यस्य गमकत्वोपदर्शनं सारूप्य- ग्रन्थेन । एवमग्रेऽपि विशेषणसाम्यात्सादृश्याद्वेति विकल्पो- प्राधान्याभिप्रायैवेति निरवद्यम् ॥

( कुव० )-अत्र च प्रस्तुताप्रस्तुतसाधारणविशेषणबल- रूप्यबलाद्वाऽप्रस्तुतवृत्तान्तस्य प्रत्यायनं तत्प्रस्तुते- ष्ये तत्समारोपार्थं सर्वथैव प्रस्तुतानन्वयिनः कवि- गोचरत्वायोगात् । ततश्च समासोक्तावप्रस्तुतव्यव- मारोपश्चारुताहेतुः । न तु रूपक इव प्रस्तुतेऽप्र- पसमारोपोऽस्ति । मुखं चन्द्र इत्यत्र मुखे चन्द्रत्वारो- चन्द्रपदसमभिव्याहारवद्रक्तश्चुम्बति चन्द्रमा इत्य- मासोक्त्युदाहरणे चन्द्रादौ जारत्वाद्यारोपहेतोस्तद्वा- दसमभिव्याहारस्याभावात् ।

"निरीक्ष्य विद्युन्नयनैः पयोदो
मुखं निशायामभिसारिकायाः ।
धारानिपातैः सह किं नु वान्त-
श्चन्द्रोऽयमित्यार्ततरं ररास ॥"

इत्येकदेशविवर्तिरूपकोदाहरण इव प्रस्तुतेऽप्रस्तु- मारोपगमकस्याप्यभावात् । तत्र हि विद्युन्नयनै- र्निरीक्षणानुगुण्यादुत्तरपदार्थप्रधानरूपमयूरव्यंसका- सव्यवस्थितादुत्तरपदार्थभूतनयनान्वयानुरोधात । पयो- क्तमपि द्रष्टृपुरुषत्वरूपणं गम्यमुपगम्यते । न चेह त- रीक्षणवत् । त्वय्यागते किमिति वेपत एष सिन्धुरिति- सेतुकृत्त्वादिवच्चाप्रस्तुतासाधारणवृत्तान्त उपात्तोऽस्ति

( अ०चं० )-एवमलङ्कारं निरूप्य तद्बोधप्रकारमुपदर्शयितुं भूमिक- यति-अत्र चेति । अत्र एषूदाहरणेषु ॥ अप्रस्तुतवृत्तान्तस्येति ।

ारादिसम्बन्धिनश्चुम्बनादिव्यवहारस्येत्यर्थः । विशेष्ये चन्द्रादौ । र्वथा आरोपानारोपान्यतरविधया प्रस्तुतानन्वयिनः प्रकृतान्वयशू-न्यस्य । यद्वा सर्वथैवेत्यस्य कवीत्यादिनान्वयः ॥ कविसंरम्भेति । स्वप्र-ोत्युद्देश्यकशब्दसन्दर्भरूपकविव्यापारेत्यर्थः । अप्रस्तुतवृत्तान्तस्य ुम्बनादेरिवाप्रस्तुतस्य जारादेरपि चन्द्रादौ समारोप इति मतं निरा-रोति-न त्विति ॥ अप्रस्तुतरूपेति । अप्रस्तुतस्वरूपेत्यर्थः । कुतस्त-ाह-मुखमित्यादि ॥ तादात्म्येन चन्द्रारोपे तादात्म्यस्यापि संसर्गवि-या आरोपविषयत्वात्तस्य च चन्द्रत्वानतिरेकाच्चन्द्रत्वारोपेत्युक्तिः । तु प्रकारतया चन्द्रत्वारोप उक्त इति भ्रमितव्यम् । चन्द्र इति ब्देन चन्द्रविशेषणत्वेनोपस्थितस्य चन्द्रत्वस्य मुखे विशेषणतयारो-ासम्भवात् । एवं जारत्वेत्यत्रापि बोध्यम्-तद्वाचकेति ॥ जारवाचके-र्थः । ननु जारादिपदसमभिव्याहाराभावाच्छ्रौतारोपासम्भवेऽप्यार्थो ारााद्यारोपोऽस्तु । न हि तत्रापि तादृशसमभिव्याहारो हेतुः । रूपक-नेरुच्छेदापत्तेरित्याशङ्क्याह-निरीक्ष्येति ॥ पयोदो मेघो विद्युत्स्वरू-नयनैर्निशायामभिसारिकाया मुखं वीक्ष्य धारानिपातैः सह वान्तः के त्वयं चन्द्र इति मत्वा आर्ततरं यथा स्यात्तथा ररास आक्रन्दनं तवानित्यर्थः । उदाहरण इवेति व्यतिरेकदृष्टान्तः । अत्र यथा गमक-स्ति तादृशस्य समासोक्त्युदाहरणे अभावादित्यर्थः । तथा चार्थारोपो-पनाशङ्क्य इति भावः । ननु विद्युन्नयनैरित्यत्र किमप्रस्तुतारोपगमकं दभावात्समासोक्तौ तदभाव इत्यतो गमकं दर्शयितुमाह-तत्रेति ॥ ानुगुण्यादानुकूल्यात् । उपमितसमासस्य पूर्वपदार्थप्रधानतया नयन-दृशविद्युत्करणकत्वस्य निरीक्षणे सम्भवात्प्रतिकूलत्वमिति भावः । नुक्तमप्यश्रौतमपि । रूपणमारोपः ॥ न चेहेति । इह समासोक्त्युदा-रणे । तथा निरीक्षणवन्नयनकरणकनिरीक्षणवत् । सेतुकृत्त्वादीत्या-दिना मन्थनकारित्वपरिग्रहः ॥

(वल० )-नाऽपि श्लिष्टसाधारणादिविशेषणसमर्पितयोः स्तुताप्रस्तुतवृत्तान्तयोरप्रस्तुतवृत्तान्तस्य विद्युन्नयनव-प्राधान्यमस्ति । येन तदनुरोधात्त्वं सेतुमन्थकृदित्यत्रेव प्रस्तुतेनुक्तमप्यप्रस्तुतरूपसमारोपमभ्युपगच्छेम । तस्मा-द्विशेषणसमर्पिताप्रस्तुतव्यवहारसमारोपमात्रमिह चारुता हेतुः । यद्यपि प्रस्तुताप्रस्तुतवृत्तान्तयोरिह श्लिष्टसाधार-णविशेषणसमर्पितयोर्भिन्नपदोपात्तविशेषणयोरिव विशे-

ष्येणैव साक्षादन्वयादस्ति समप्राधान्यम्, तथाप्यप्र
वृत्तान्तान्वयानुरोधान्न प्रस्तुतेऽप्रस्तुतरूपसमारोपो
कार्यः । तथा हि यथा प्रस्तुतविशेष्येऽप्रस्तुतवृत्तान्
न्वयायोग्यता तथैव वाऽप्रस्तुतेऽपि जारादौ नास्ति
तवृत्तान्तस्यान्वययोग्यता । एवं च समप्रधानयोः प्र
प्रस्तुतवृत्तान्तयोरन्यतरस्यावश्यमारोपेऽभ्युपगन्तव्ये
एव प्रस्तुतेऽप्रस्तुतस्यारोपश्चारुताहेतुरिति युक्तम् ॥

( अ० चं० )-नन्विहापि परनायिकामुखचुम्बनरूपस्याप्रस्तुतवृत्ता
प्रस्तुतासाधारणधर्मत्वादप्रस्तुतारोपगमकत्वं स्यादित्याशङ्क्य
हरति-नापीति ॥ साधारणादीत्यादिना सादृश्यगर्भविशेषण
वृत्तान्तयोरिति । निर्धारणे षष्ठी । वृत्तान्तयोर्मध्य इत्यर्थः ॥
नवदिति । प्रस्तुताप्रस्तुतयोर्विद्यन्नयनयोर्मध्ये यथा नयनस्यो
प्रधानसमासात्प्राधान्यं तथा नास्तीत्यर्थः । सेतुमन्थकृदिति
सेतुबन्धकृदिति त्वपपाठः कथञ्चिदर्थतोऽनुवादत्वेन व्याख्येयः
संहरति-तस्मादिति । मात्रपदेनाऽप्रस्तुतारोपव्यवच्छेदः ॥
नवत्समासकृतश्रौतप्राधान्याभावेऽपि विशेषणसामर्थ्यावगतस्य
तवृत्तान्तस्यार्थतः प्राधान्यमस्तीति शङ्कते-यद्यपीति ॥ नन्वप्र
त्तान्ताभिन्नत्वेनावगतस्य प्रस्तुतवृत्तान्तस्य प्रस्तुतविशेष्येणा
थमप्रस्तुतवृत्तान्तस्य प्राधान्यमिति शङ्कानिरासायाह-विशेष्ये
ननु तद्विशेषणीभूतप्रस्तुतवृत्तान्तेनेत्येवकारार्थः । समाधत्ते-त
अयमाशयः । नात्र श्लिष्टादिविशेषणैः समर्पितः परनायिका
नादिरूपोऽप्रस्तुतवृत्तान्तः प्रागेव कयापि व्युत्पत्त्याप्रस्तु
भासते । यद्बलादप्रस्तुतजाराद्यारोपावगतिः स्यात् । अपि
स्थ्येनावगते तस्मिन्प्रस्तुतासम्बद्धस्य कविसंरम्भगोचरत्वा
स्तुतसमारोपितत्वेन पर्यवसानमिति । नन्वयं तर्हि प्रस्तुतवृत्ता
प्यप्रस्तुतवृत्तान्ताश्रये धर्मिण्यन्वयोऽस्तु । असम्बद्धाभिधानप्र
हारस्य तुल्यत्वादित्याशङ्क्याह-तथाहीत्यादि ॥ एवं च यो
विनिगमकविरहे च मास्तु तर्हि कस्याप्यन्वयस्तत्राह-अवश्य
अन्यथासम्बद्धाभिधानप्रसङ्गापत्तेरिति भावः । किं तर्हि वि
तत्राह-श्रुत एवेति ॥ तथा च श्रुतप्रस्तुतार्थोपस्कारकतया च
हेतुत्वमेव विनिगमकमिति भावः । अप्रस्तुतस्याप्रस्तुतवृत्तान्त

(वल० )–नन्वेवं सति विशेषणसाम्यादप्रस्तुतस्यं गम्यत्वं समासोक्तिः ।

"विशेषणानां साम्येन यत्र प्रस्तुतवर्तिनाम् ।
अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते ॥"

इत्यादीनि प्राचीनानां समासोक्तिलक्षणानि न सङ्गच्छेरन् । प्रस्तुते श्लिष्टसाधारणादिविशेषणसमर्पितानुरागपूर्वकवदनचुम्बनाद्यप्रस्तुतवृत्तान्तसमारोपमात्रस्य चारुताहेतुत्वाभ्युपगमेन विशेषणसाम्यकृतकामुकाद्यप्रस्तुतधर्मिव्यञ्जनानपेक्षणादिति चेदुच्यते । स्वरूपतोऽप्रस्तुतवृत्तान्तस्यारोपो न चारुताहेतुः । किन्त्वप्रस्तुतकामुकादिसम्बन्धित्वेनावगम्यमानस्य तस्यारोपः । तथाभूतस्यैव रसानुगुणत्वात् । न च तावदवगमने विशेषणपदानां सामर्थ्यमस्ति । अतः श्लेषादिमहिम्ना विशेषणपदैः स्वरूपतः समर्पितेन वदनचुम्बनादिना तत्सम्बन्धिनि कामुकादावभिव्यक्ते पुनस्तदीयत्वानुसन्धानं तत्र भवति॥

(चं० )–नन्वेवमिति ॥ एवमप्रस्तुतसमारोपानङ्गीकारे । विशेषणानामित्यादि विद्यानाथोक्तं लक्षणम् । प्रस्तुतवर्तिनां विशेषणानां साम्येनेत्यन्वयः । प्रस्तुते समारोपार्थम् । अप्रस्तुतधर्मिव्यञ्जनानपेक्षामपि समारोप्यमाणवृत्तान्तविशेषणत्वार्थं तदपेक्षणान्न लक्षणासङ्गतिरित्याह–स्वरूपत इति ॥ स्वरूपतोऽप्रस्तुतसम्बन्धित्वेनाज्ञायमानस्य । नन्वपेक्षासत्त्वेपि विशेषणसाम्यस्य तद्व्यञ्जनासामर्थ्याल्लक्षणासङ्गतितादवस्थ्यमित्याशङ्क्य साक्षादसामर्थ्येऽपि वृत्तान्ताभिव्यक्तिद्वारा सम्भवान्न दोष इत्याह–न चेत्यादि ॥ तदीयत्वानुसन्धानं कामुकसम्बन्धित्वानुसन्धानम् । तत्र मुखचुम्बनादौ अनुसन्धानं तद्वदिति पाठः । अनुसन्धानवदिति पाठे यथेत्यस्यासङ्गतेः । अत एवाप्रस्तुतव्यञ्जनस्यापेक्षणादेव । नन्वप्रस्तुतधर्मिव्यञ्जनानपेक्षणे ईदृशः प्रवादः कुतो युक्तस्तत्राह–कन्दुक इति ॥ विशिष्टेत्यस्य सेव्यत्वेनान्वयः ॥

(वल० )–यथा स्वरूपतो दृष्टेन राजाश्वादिना तत्सम्बन्धिनि राजादौ स्मारिते पुनरश्वादौ तदीयत्वानुसन्धान-

मिति विशेषणसाम्येन वाच्योपस्कारकस्याप्रस्तुत-
नस्यास्त्यपेक्षा । अत एव श्लिष्टविशेषणायामिव सा-
रणविशेषणायामप्यप्रस्तुतव्यवहारसमारोप इत्येव प्रा-
चीनानां प्रवादः । कन्दुके व्यावल्गत्कुचभारत्वा-
शिष्टवनितासेव्यत्वस्य कामुकसम्बन्धित्वेनैव सम-
णीयत्वात् । स्वरूपतः कन्दुकेऽपि तस्य सत्त्वेना-
रोपणीयत्वात । किञ्च सारूप्यनिबन्धनत्वेनोदाह-
समासोक्तावप्रस्तुतवृत्तान्तस्याशब्दार्थस्याप्रस्तुतवृत्त-
रूपेणैव गम्यतया तेन रूपेण तत्र समारोपसिद्धेः।
त्रापि तथैव युक्तमिति युक्तमेव प्राचीनानां लक्षण-
विभावनीयम् ॥ ६० ॥

( अ० चं० ) सम्बन्धित्वेनैवेत्येवकारोक्तमेवार्थं सोपपत्तिकमाह-
इति ॥ अप्रस्तुतकामुकसम्बन्धित्वानालिङ्गितरूपेणेत्यर्थः । तथा-
पासम्भवात्तादृशप्रवादानुपपत्तिरिति भावः । श्लिष्टविशेषणा-
न्द्रीत्यादौ मुखचुम्बनादेः स्वरूपतोऽप्यारोपस्यैव सत्त्वात्साधा-
षणायामुपष्टम्भकत्वेन प्रवादोपन्यासः । ननु तत्रापि तादृशव-
व्यत्वस्य तादृशवनिताकृतविपरीतरतपात्रत्वरूपस्याप्रस्तुतवृ-
पस्य स्वरूपतोऽप्यारोपस्यैव सम्भवान्न तादृशप्रवादानुपपत्तिर-
किंचेति ॥ युक्तमिति । तत्सामान्यादितरेषु तथात्वमिति
दिति भावः ॥ लक्षणमिति । जातावेकवचनम् । " अयं
पश्य रक्तश्चुम्बति चन्द्रमाः । " इत्यत्र शक्तिव्यञ्जनाभ्यां प्रा-
म्भसम्बन्धाश्रयश्चन्द्रो जारसम्बन्धिसानुरागपरनायिकामुख-
श्रय इति बोधः । अप्रस्तुतवृत्तान्ताभिन्नत्वेनाध्यवसितस्य
वृत्तान्तस्य तादात्म्येनाप्रस्तुतारोपविषये प्रस्तुतधर्मिण्यन्व-
मते तु सानुरागपरनायिकामुखचुम्बनाभिन्नप्राचीप्रारम्भसंयो-
जाराभिन्नश्चन्द्र इति बोधः । एवमुदाहरणान्तरेष्यनेनैव
बोधप्रकारा ऊहनीयाः ॥ ६० ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां समासोक्त्य-
लङ्कारप्रकरणम् ॥ २३ ॥

## परिकरालङ्कारः २४.

(चन्द्रा० )—अलंकारः परिकरः साभिप्राये विशेषणे।
सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ॥ ६१ ॥

(कुवल० )—अत्र सुधांशुकलितोत्तंस इति विशेषणं तापहरणसामर्थ्याभिप्रायगर्भम् ।

यथा वा—तव प्रसादात्कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणे-
र्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥

अत्र पिनाकपाणेरिति हरविशेषणं कुसुमायुध इत्यर्थलभ्याहमर्थविशेषणं च सारासारायुधत्वाभिप्रायगर्भम् ।

यथा वा—सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥

अत्र शरीरविशेषणानि तस्य हेयत्वेनासंरक्षणीयत्वाभिप्रायगर्भाणि ॥

(अ०चं० )—गुणीभूतव्यङ्ग्यस्य प्रभेदभूतसमासोक्त्यलङ्कारप्रसङ्गात्तत्प्रभेदं परिकरालङ्कारं लक्षयति—अलङ्कार इति ॥ अलङ्कारत्वोत्कीर्तनं च दोषाभावेनैव गतार्थत्वमिति शङ्कानिरासार्थम् । तत्प्रपञ्चनं चाग्रे करिष्यते। साभिप्राये प्रकृतार्थोपपादकार्थविषयकाभिप्रायपूर्वकं तथाभूतार्थव्यञ्जक इति यावत् । इत्थं च प्रकृतार्थोपपादकार्थव्यञ्जकविशेषणत्वं लक्षणं बोध्यम् । ध्वनावतिव्याप्तिवारणाय प्रकृतार्थोपपादकेति । हेत्वलङ्कारवारणाय बोधकत्वं विहाय व्यञ्जकत्वनिवेशः । वक्ष्यमाणपरिकराङ्कुरालङ्कारवारणाय विशेषणेति । तत्र तु विशेष्यं तथेति नातिप्रसङ्गः ॥ सुधांश्विति । सुधांशुना कलितः कृत उत्तंसः शेखरो येन इति हरविशेषणम् । "उत्तंसः कर्णपूरे स्याच्छेखरे चावतंसवत् ।" इति विश्वः । सामर्थ्याभिप्रायं सामर्थ्यव्यञ्जकम् ॥ तवेति । इन्द्रं प्रति कामस्योक्तिः । तव प्रसादात्कुसुमायुधोप्यहं मधुं वसन्तमेवैकं मुख्यं सहायं लब्ध्वा पिनाको धनुर्विशेषः पाणौ यस्य तादृशस्यापि हरस्य धैर्यच्युतिं धैर्यस्खलनं कुर्याम् । अन्ये धन्विनो धनुर्धरा मम पुरः के। अगणनीया इत्यर्थः ।

कुसुमायुध इति विशेषणं चेत्यन्वयः ॥ अर्थलभ्येति । कुर्यामित्य पुरुषाक्षिप्तेत्यर्थः । अभिप्रायगर्भमभिप्रायपूर्वकम् । अत एवावयव मात्रविश्रान्तत्वाद्धरपदेन न पौनरुक्त्यमपि ॥ सर्वेति । सर्वेषामशुचि रक्तपूयरेतोविण्मूत्रादीनां निधानस्य स्थानभूतस्य कृतघ्नस्य उत्त पानादिकृतोपकारनाशकस्य शरीरकस्य । शरीरकस्येति नि कप्रत्ययः । कृते तदर्थं तत्संरक्षणार्थमिति यावत् । विशेषणानि क्तानि तस्य शरीरस्य ॥

(कुव०)-व्यासस्थं नैकतया स्थितं श्रुतिगणं जन्मी न वल्मी
नाभौ नाभवमच्युतस्य सुमहद्भाष्यं च नाभाषि
चित्रार्थां न बृहत्कथामचकथं सुत्राम्णि नासं गुरु-
र्देव त्वद्गुणवृन्दवर्णनमहं कर्तुं कथं शक्नुयाम् ॥

अत्र श्रुतिगणं न व्यास्थमित्यादीनि विशेषण स्वस्मिन्व्यासाद्यसाधारणकार्यकर्तृत्वनिषेधमुखेन व्यास इत्याद्यभिप्रायगर्भाणि। तत्राद्ययोरुदाहरणयोरे विशेषणं, समनन्तरयोः प्रत्येकं बहूनि विशेषणानि। त प्रथमोदाहरणे सर्वाणि विशेषणान्येकाभिप्रायगर्भा पदार्थरूपाणि च द्वितीयोदाहरणे भिन्नाभिप्रायगर्भा वाक्यार्थरूपाणि चेति भेदः । एतेषु व्यङ्ग्यार्थसद्भावे ध्वनिव्यपदेशः । शिवस्य तापहरणे मन्मथस्य कैमुति न्यायेन सर्वधन्विधैर्यभञ्जकत्वे शरीरसंरक्षणार्थं पापम रतां मूढत्वे स्वस्य वर्णनीयराजगुणकथनाशक्तत्वे च वा एवोपस्कारकत्वात् ॥ अत एव व्यङ्ग्यस्य वाच्यपरिकर त्परिकर इति नामास्यालङ्कारस्य। केचित्तु निष्प्रयोजनं शेषणोपादानेऽपुष्टार्थत्वदोषस्योक्तत्वात्सप्रयोजनत्वं वि णस्य दोषाभावमात्रं न कश्चिदलङ्कारः। एकनिष्ठतादृ नेकविशेषणोपन्यासे परं वैचित्र्यविशेषात्परिकर इ लङ्कारमध्ये परिगणित इत्याहुः। वस्तुतस्त्वनेकविशे पन्यास एव परिकर इति न नियमः । श्लेषयमकादि

दुष्टार्थदोषाभावेन तत्रैकस्यापि विशेषणस्य साभिप्रायस्य विन्यासे विच्छित्तिविशेषसद्भावात्परिकरोपपत्तेः ।

यथा—अतियजेत निजां यदि देवता-
मुभयतश्च्यवते जुषतेऽप्यघम् ।
क्षितिभृतैव सदैवतका वयं
वनवताऽनवता किमहिद्रुहा ॥

अत्र हि पुरुहूतपूजोद्युक्तान्नन्दादीन्प्रति भगवतः कृष्णस्य वाक्ये गोवर्द्धनगिरिरेव चास्माकं रक्षकत्वेन दैवतमिति स एव पूजनीयो न त्वरक्षकः पुरुहूत इत्येवं परं वनवतेति गोवर्द्धनगिरेर्विशेषणं काननवत्त्वान्निर्झरादिमत्त्वाच्च पुष्पमूलफलतृणादिभिरारण्यकानामस्माकमस्मद्धनानां गवां चायमेव रक्षक इत्यभिप्रायगर्भम् । एवमत्र साभिप्रायैकविशेषणविन्यासस्यापि विच्छित्तिविशेषवशादस्य साभिप्रायस्याऽलङ्कारत्वसिद्धावन्यत्रापि सुधांशुकलितोत्तंस इत्यादौ तस्यात्मलाभो न निवार्यते । अपि च एकपदार्थहेतुकं काव्यलिङ्गमलङ्कार इति सर्वसम्मतम् । तद्वदेकस्यापि विशेषणस्य साभिप्रायस्यालङ्कारत्वं युक्तमेव ॥ ६१ ॥

अ० चं० )—व्यास्थमिति ॥ राजानं प्रति कवेरुक्तिः । हे देव राजन् ! त्वद्गुणानां वृन्दस्य समूहस्य वर्णनं कर्तुमहं कथं शक्नुयां शक्तो भवेयमित्यन्वयः । कुतस्तत्राह । यतोऽहमेकरूपतया स्थितं वेदसमूहं न व्यास्थमनेकशाखारूपेण न विस्तारितवान् । तथा च तत्कर्त्ता व्यासो न भवामीति व्यज्यते । एवमग्रेऽपि । वल्मीकतो वल्मीकाज्जन्मास्यास्तीति जन्मी न भवामीति शेषः । तथा च नाहं वाल्मीकिरिति । अच्युतस्य नाभौ नाभवं नोत्पन्न इत्यनेन नाहं चतुर्मुख इति । सुमहद्भाष्यं महाभाष्यं च नाभाषिषं न भाषितवानित्यनेन नाहं सहस्रजिह्वः शेष इति । चित्रो विचित्रोऽर्थो यस्यास्तां बृहत्कथां न अचकथं न कथितवानित्यनेन नाहं तद्वक्ता शिवो गुणाढ्यो वेति । सुत्राम्णि इन्द्रे गुरुरुपदेशको नासमित्यनेन नाहं वाक्पतिरिति च व्यज्यते ॥ उक्तेषूदाहरणेषु विशेष्यस्यैकमेव सम- एकैकमेकस्य वैलक्षण्यं दर्शयति—तत्रेत्यादिना ॥

नन्तरयोरनन्तरोक्तयोः प्रत्येकमेकं विशेष्यं प्रति । तत्रापि तयोः
एकाभिप्रायगर्भाण्येकार्थाभिप्रायपूर्वकाणि ॥ वाक्यार्थेति । न
मित्यादिनिषेधवाक्यार्थषट्कस्योक्तरीत्या हेतुत्वेनान्तिमवाक्यार्थ
षणत्वादिति भावः । एतेषु उक्तोदाहरणेषु । ध्वनिव्यपदेशो
व्यवहारः । तत्र हेतुमाह-तापहरणेत्यादिना ॥ तापहरणे इत्या
म्यन्तचतुष्टयस्य वाच्य इत्यनेन सामानाधिकरण्येनान्वयः ॥ उ
रकत्वादिति । तथा चापराङ्गरूपगुणीभूतव्यङ्ग्यभेदत्वान्न ध्वनि
हार इति भावः । नन्वेवमपि यथाश्रुतलक्षणस्य निःशेषच्युते
ध्वनावतिव्याप्तिरित्यत आह-अत एवेति । वाच्योपस्कारका
त्यर्थः । परिकरत्वादङ्गत्वात् । तथा च परिकरपदमहिम्ना प्रकृत
पादकत्वस्य व्यङ्ग्यविशेषणस्य लाभान्नातिव्याप्तिरिति भावः । अ
र्थेति भावप्रधानम् ॥ उक्तत्वादिति । "अर्थोऽपुष्टः कष्टो व्याहत
क्तदुष्क्रमग्राम्याः" इत्यादिनाऽलङ्कारिकैरुक्तत्वादित्यर्थः । क
तैरेवास्यालङ्कारत्वेन कथनमत आह-एकनिष्ठेति । तादृशेति ।
प्रायेत्यर्थः ॥ दोषाभावेनेति । अपुष्टार्थत्वस्य दोषत्वाभावेनेत्यर्थः ।
टालङ्कारसम्पत्त्या सहृदयवैमुख्यरूपदूषकताबीजाभावादिति भ
विच्छित्तिश्चमत्कृतिः । परिकरत्वोपपत्तेः परिकरस्यालङ्कारत्वो
तत्र दोषः स्यात्प्रसक्त्या विच्छित्तिविशेषस्य तदभावप्रयुक्तत्वास
त्तत्प्रयोजकमलङ्कारत्वमावश्यकमिति भावः । यमकस्थले उदा
यथेति ॥ निजां देवतामतिक्रम्य यदि यजेत अथद्दिवतान्तरं
तदोभयतो लोकद्वयाच्च्यवते भ्रश्यत्यघं पापमपि जुषते सेवते
तीति यावत् । का निजा देवता तत्राह । वयं वनवता प्रशस्तवन
क्षितिभृता गोवर्द्धनगिरिणैव सदैवतका दैवतसहिताः । स एवा
दैवतमित्यर्थः । अनवताऽरक्षकेण अहिद्रुहा इन्द्रेण किं प्र
मिति शेषः । अहिर्वृत्रासुरः 'अहिर्वृत्रासुरे सर्पे' इति वि
नन्वेवं सति तत्रैवालङ्कारता स्यान्न तु सुधांशुकलितोत्तंस इत्या
आह-एवमिति ॥ विच्छित्तिविशेषेति दोषाभावप्रयुक्तविच्छित्ति
त्तेत्यर्थः । ननु यमकादावपि तादृशविच्छित्तिविशेषे मानाभा
विच्छित्तिसामान्यन्तु पर्युदस्तदोषाभावेनाप्युपपन्नम् । आपत्काल
दस्तस्य मृच्छौचहीनस्यादोषस्याभावेनेव तदानीमपि मृच्छौच
तिशयाधानमिति नालङ्कारत्वसिद्धिरित्यत आह-अपि चेति ॥ "
द्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं हा सोपानपरम्परे गि
ताकान्तालयालङ्कृते । अद्याराधनतोषितेन विभुना युष्मत्सप
खालोकोच्छेदिनि मोक्षनामनि महामोहे निर्लीयामहे ॥" इ

मोक्षस्य महामोहत्वे सुखालोकोच्छेदिनीत्येकपदार्थो हेतुरिति काव्यलिङ्गमलङ्कारत्वेन यथा स्वीकृतं न तु निर्हेतुत्वदोषाभावमात्रतया विच्छित्तिविशेषस्यानुभवसिद्धत्वात्तथेहापीति भावः ॥ ६१ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां परिकरालङ्कारप्रकरणम् ॥ २४ ॥

---

## परिकरांकुरालङ्कारः २५.

(चन्द्रा०)-साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ।
चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥ ६२ ॥

(कुवल०)-अत्र चतुर्भुज इति विशेष्यं पुरुषार्थचतुष्टयदानसामर्थ्याभिप्रायगर्भम् ।

यथा वा-फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः ।
द्रष्टुमाखण्डलः शक्तः काहमेष क ते गुणाः ॥

फणीन्द्र इत्यादिविशेष्यपदानि सहस्रवदनाद्यभिप्रायगर्भाणि ॥ ६२ ॥

(अ० चं)-साभिप्राय इति ॥ अत्र विशेषणपदस्थाने विशेष्येति प्रक्षिप्य पूर्ववल्लक्षणं बोध्यम् । तच्च परिकरेऽतिव्याप्तिवारणार्थम् । लक्ष्ये लक्षणं सङ्गमयति-अत्रेति ॥ यद्यपि देवान्तरव्यावर्तकतया चतुर्भुज इति विशेषणं तथापि नृपादिसाधारणदेवपदशक्तेर्विष्णौ नियमनेन विशेष्यप्रतीत्यौपयिकतया विशेष्यपदत्वमभिमतं बोध्यम् । असन्दिग्धमुदाहरति-फणीन्द्र इति ॥ राजानं प्रति कवेरुक्तिः । तव गुणान्वक्तुं फणीन्द्रः शेषोऽसमर्थ इत्यध्याहार्यम् । एवमग्रेपि । हैहयाधिपः कार्तवीर्यः । आखण्डल इन्द्रः । उभयत्र गुणानित्यनुषज्यते । एष मर्त्यधर्मः अहं क ते गुणाः क्वेति कशब्दौ महदन्तरं सूचयतः । सहस्रमुखत्वादीत्यादिना सहस्रबाहुत्वसहस्रनयनत्वयोः सङ्ग्रहः । अत्र अनेकेषां विशेष्यपदानां तत्तदभिप्रायगर्भत्वं विशेषः ॥ ६२ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानंदटीकायां परिकाराङ्कुरालङ्कारप्रकरणम् ॥ २५ ॥

---

## श्लेषाऽलंकारः २९.

(चंद्रा०)–नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रितः।
सर्वदो माधवः पायात्स यो गङ्गामदीधरत् ॥ ६३ ॥
अब्जेन त्वन्मुखं तुल्यं हरिणा हितसक्तिना ।
उच्चरद्भूरिकीलालः शुशुभे वाहिनीपतिः ॥ ६४ ॥

( कुवल० )–अनेकार्थशब्दविन्यासः श्लेषः । स च त्रिविधः प्रकृतानेकविषयः अप्रकृतानेकविषयः प्रकृताप्रकृतानेकविषयश्च । सर्वदेत्यादिक्रमेणोदाहरणानि । तत्र सर्वदो माधव इति स्तोतव्यत्वेन प्रकृतयोर्हरिहरयोः कीर्तनात्प्रकृतश्लेषः । अब्जं कमलमब्जश्चन्द्रस्तयोरुपमानमात्रतया वर्णनाप्रकृतयोः कीर्तनमित्यप्रकृतश्लेषः । वाहिनीपतिः सेनापतिः समुद्रश्च । तत्र समितौ शस्त्रप्रहारोत्पतद्रुधिरस्य सेनापतेरेव वर्णनं प्रकृतमिति प्रकृताप्रकृतः श्लेषः ॥
यथा वा–त्रातः काकादरो येन द्रोग्धापि करुणात्मना ।
पूतनामारणख्यातः स मेऽस्तु शरणं प्रभुः ॥
नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः ।
सदृशे वनवृद्धानां कमलानां त्वदीक्षणे ॥
असावुदयमारूढः कान्तिमान्रक्तमंडलः ।
राजा हरति लोऽकस्य हृदयं मृदुलैः करैः ॥

तत्राद्ये स्तोतव्यत्वेन प्रकृतयो रामकृष्णयोः श्लेषः । द्वितीये उपमानत्वेनाप्रकृतयोः पद्महरिणयोः श्लेषः । तृतीये राजा हरति लोकस्येति चन्द्रवर्णनप्रस्तावे प्रकृतस्य प्रत्यग्रोदितचन्द्रस्याप्रकृतस्य नवाभिषिक्तस्य नृपतेः श्लेषः । यदत्र प्रकृताप्रकृतश्लेषोदाहरणे शब्दशक्तिमूलध्वनिमिच्छन्ति प्राञ्चः, तत्प्रकृताप्रकृताभिधानमूलकस्योपमादेरलङ्कारस्य व्यङ्ग्यत्वाभिप्रायं न त्वप्रकृतार्थस्यैव व्यङ्ग्यत्वाभिप्रायम् । अप्रकृतार्थस्यापि शक्त्या प्रतिपाद्यस्य

भिधेयत्वावश्यंभावेन व्यक्त्यनपेक्षणात् । यद्यपि प्रकृतार्थे प्रकरणबलाज्झटिति बुद्धिस्थे सत्येव पश्चान्नृपतितद्ग्राह्यधनादिवाचिनां राजकरादिपदानामन्योन्यसान्निधानबलात्तत्तद्विषयशक्त्यन्तरोन्मेषपूर्वकमप्रस्तुतार्थः स्फुरेत् । न चैतावता तस्य व्यङ्ग्यत्वम् । शक्त्या प्रतिपाद्यमाने सर्वथैव व्यक्त्यनपेक्षणात्पर्यवसिते प्रकृतार्थाभिधाने पश्चात्स्फुरति चेत् कामं गूढश्लेषो भवतु । अस्ति चान्यत्रापि गूढः श्लेषः ।

> अयमतिजरठाः प्रकामगुर्वी-
> रलघुविलम्बिपयोधरोपरुद्धाः ।
> सततमसुमतामगम्यरूपाः
> परिणतदिक्करिकास्तटीर्बिभर्ति ॥

( अ०चं )—श्लेषं लक्षयति—नानार्थेति ॥ नानार्थस्य शब्दस्य संश्रयो योजनं श्लेष इति लक्षणम् । वर्ण्येत्यादि विभागः । वर्ण्यं चावर्ण्यं च वर्ण्यावर्ण्योभयं च एतत्त्रयाश्रितस्तद्विषय इत्यर्थः ॥ सर्वेति । सर्वदः स माधवः पायात् । यः अगं गोवर्द्धनपर्वतं गां पृथ्वीं च वराहावतारे धृतवानिति विष्णुपक्षे । हरपक्षे तु स उमाधवः सर्वदा पायात् । यो गङ्गां धृतवानित्यर्थः । हरिणेन मृगेणाङ्करूपतया आहिता कृता सक्तिः सङ्गो यस्येति चन्द्रपक्षे । हरिणा सूर्येणेति कमलपक्षे । उच्चरच्छस्त्रपातैरुद्गच्छत्कीलालं रुधिरं यस्य स वाहिनीपतिः सेनापतिः । तथा वाहिनीनां नदीनां पतिः समुद्रश्चेति पक्षे कीलालं जलम् । समितौ संग्रामे ॥ त्रात इति । येन करुणायुक्तान्तःकरणेन द्रोहकर्तापि अदरो भयशून्यः काकस्त्रातो रक्षितो न तु हतः । स पवित्रनामा रणे ख्यातो विभू रामो मे शरणमस्त्वित्यर्थः । कृष्णक्षे तु काकोदरः कालियसर्पः पूतनाया राक्षस्या मारणेन ख्यात इति शेषः ॥ नीतानामिति । दयितां प्रति नायकोक्तिः । तव ईक्षणे नेत्रे कमलानां पद्मानां हरिणानां च सदृशे स्त इत्यन्वयः । कीदृशानाम् । वने जले अरण्ये च वृद्धिं प्राप्तानाम् । तथा लुब्धैः लोभशीलैर्भूरिभिः शिलीमुखैः भ्रमरैराकुलीभावं व्याप्ततां नीतानामिति पद्मपक्षे । हरिणपक्षे तु लुब्धैः व्याधैः । कर्तृभिः । भूरिशिलीमुखैर्बाणैः । करणभूतैः । आकुलीभावं चपलतां नीतानामित्यर्थः । 'मृगप्रभेदे कमलः' इति विश्वः ॥ असाविति । उदयं शैलमभिवृद्धिं च । रक्तं रक्त-

वर्णमनुरक्तं च, मण्डलं बिम्बं देशश्च, राजा चन्द्रो नृपश्च, मृदु भिनवैरल्पैश्च, करैः किरणैर्ग्राह्यधनैश्च ॥ प्रत्यग्रोदितेति । अभिनवो त्यर्थः । ननु प्रकरणेनाभिधाया नियमनादप्रकृतार्थस्य व्यङ्ग्यत्वमेवे कथं श्लेष इत्याशंक्याह-यदिति ॥ अलङ्कारस्येति । न चैवं शब्दश मूलवस्तुध्वनेरुच्छेद इति वाच्यम् । "शनिरशनिश्च तमुच्चैर्निह कुप्यसि नरेन्द्र यस्मै त्वम् । यत्र प्रसीदसि पुनः स भात्युदारोऽनु रश्च ॥" इत्यत्र शनिविरुद्धरूपे प्रस्तुतेऽशनिशब्देनाभिधया प्रतीय नेऽपि तन्मूलकस्य विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत वस्तुध्वनेरशनिशब्दव्यक्तिमूलस्य सम्भवात् । अलङ्कारस्येत्यस्य लक्षणत्वात् । अन्योन्यसन्निधानबलात्परस्परार्थसम्बन्ध्यर्थवाचकश समभिव्याहाररूपशब्दान्तरसन्निधिबलात् । तथा चाप्रकृतेऽप्यभिधा यामकमस्तीति भावः । एतावता पूर्वापरभावमात्रेण तस्याप्रकृतार्थ गूढश्लेष इति । गूढत्वं चाप्रकृतत्वेन द्वितीयार्थस्य शीघ्रमप्रत्ययात् ॥ अ मिति । माघे रैवतकगिरिवर्णनम् । अयं गिरिस्तटीर्बिभर्तीत्यन्वय किंभूताः । अतिजरठा अत्यन्तं कठिनाः । प्रकामगुर्वीरतिमहत्य अलघुभिर्विलम्बमानैर्मेघैर्व्याप्ताः । निरन्तरं प्राणिनामगम्यरूपाः । प णता तिर्यग्दन्तप्रहारिणो दिग्गजा यासु ताः । वृद्धवेश्यापक्षे तु जर जीर्णाः पयोधराः कुचाः । अगम्याः सङ्गमायोग्याः । परिणते प्रकटे द्वि रिके यासां ता इत्यर्थः । दिग्वर्तुलं दशनक्षतं करिका नखक्षतम् 'दिग्दष्टं वर्तुलाकारं करिका नखरेखिका ।' इति यादवः ॥

( कुवल० )-मन्दमग्निमधुरर्यमोपला दर्शितश्वयथु चाभवत्तमः
दृष्टयस्तिमिरजं सिषेविरे दोषमोषधिपतेरसन्निधौ ॥

अत्र हि समासोक्त्युदाहरणयोः प्राकरणिकेऽर्थे प्रकरण वशाज्झटिति बुद्धिस्थे विशेषणसाम्यादप्रकृतोऽपि वृद्ध वेश्यावृत्तान्तादिः प्रतीयते । तत्र समासोक्तिरभङ्गश्लेष इति सर्वेषामभिमतमेव । एवमन्यत्रापि गूढश्लेषे ध्वनि बुद्धिर्न कार्या । यथा वा-

रम्या इति प्राप्तवतीः पताका
रागं विविक्ता इति वर्द्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः
समं वधूभिर्वलभीर्युवानः ॥

अत्र द्वितीयान्तविशेषणसमर्पितार्थान्तराणां न शब्द-सामर्थ्येन वधूभिरन्वयः विभक्तिभेदात् । न च विभक्ति-भेदेऽपि तदन्वयाक्षेपकं साधर्म्यमिह निबद्धमस्ति । यतः-

"एतस्मिन्नधिकपयःश्रियं वहन्त्यः
सङ्क्षोभं पवनभुजा जवेन नीताः ।
वाल्मीकेररहितरामलक्ष्मणानां
साधर्म्यं दधति गिरां महासरस्यः ॥"

इत्यत्रेवाक्षिप्तश्लेषो भवेत् ।

(अ०चं०)-मन्दमिति ॥ ओषधीनां पत्युश्चन्द्रस्यासन्निधौ सत्यर्यमोपलाः सूर्यकान्ता मन्दीभूतमग्निं धृतवन्तः । तमः दर्शितः श्वयथुः पुष्टत्वं येन तथाऽभवत् । दृष्टयस्तिमिरजं दोषमान्ध्यं सिषेविरे । पक्षान्तरे ओष-धिपतिर्वैद्यः । एवं मन्दाग्नित्वशोथतिमिराणि रोगविशेषाः । वृत्तान्ता-द्रिरित्यादिपदाद्रोगिवैद्यवृत्तान्तः परिगृह्यते ॥ अभङ्गश्लेष इति । तथा च श्लेषस्थले व्यञ्जनाविरहादप्रकृते तत्स्वीकारे श्लेषव्यवहारः सर्वेषामनुप-पन्नः स्यादिति भावः॥रम्या इति । माघ एव द्वारकावर्णनम् । यस्यां द्वार-कायां युवानो वधूभिः समं वलभीः प्रासादोपरितनगृहाण्यसेवन्त सेवि-तवन्तः । किम्भूताः । रम्याः इति हेतोः पताका वैजयन्तीः प्राप्तवतीः । विविक्ता विजनाः इति हेतोः रागं रतिं वर्द्धयन्तीः । नमन्ति वली-कानि छादनपटलप्रान्ता यासां ताः । वधूपक्षे पताकाः सौभाग्यानि । 'पताका वैजयन्त्यां स्यात्सौभाग्यनाटकाङ्कयोः' इति मेदिनी । राग-मनुरागम्, विविक्ताः सतीत्वेन पवित्राः नमत्त्रिवलीकाश्चेति ॥ न चेति । यत इत्यस्य इत्यत्रैवाक्षिप्तः श्लेषो भवेदित्यग्रेतनेनान्वयः । एतस्मिन्नि-ति तत्रैव रैवतकगिरिवर्णनम् । एतस्मिन्गिरौ महत्यः सरस्यः वाल्मी-केर्मुनेर्गिरां साधर्म्यं सादृश्यं दधति धारयन्ति । किम्भूतानां गिराम् । अरहितौ सम्बद्धौ रामलक्ष्मणौ यासु तथाभूतानां सरसीपक्षे अर-हिताः संयुक्ताः रामाः पतयो यासां तथाभूता लक्ष्मणाः सारसवनिता यासु ता इति । किम्भूताः सरस्यः । अधिकां जलशोभां वहन्त्यः पवन-सम्भूतेन वेगेन संक्षोभं तरङ्गाकुलत्वं नीताः प्रापिताः । वाल्मीकिगिर-स्तु । अधिकाः कपयो यासु ताः पवनभुवा हनूमता वेगेन निजेन संक्षो-भमुद्भटत्वं प्रापिता इति ॥

(कुव०)-सममित्येतत्तु क्रियाविशेषणं सहार्थत्वेनाप्युपप-न्नम् । वधूषु श्लिष्टविशेषणार्थान्वयात्प्राक् द्रागप्रतीतं

साम्यं नालम्बते तस्मादर्थसौन्दर्यबलादेव तदन्वय
सन्धानमिति गूढश्लेषः । तदनु तद्बलादेव समशब्द
साधर्म्यार्थकल्पनमिति वाच्यस्यैवोपमालङ्कारस्याङ्ग
मित्यलं प्रपञ्चेन । तस्मात्सिद्धं श्लेषत्रैविध्यम् । एवं च
प्रकारान्तरेणापि द्विविधः सम्पन्नः । उदाहरणगतेषु
कीलालवाहिनीपत्यादिशब्देषु परस्परविलक्षणं पद
मनपेक्ष्यानेकार्थक्रोडीकारादभङ्गः । सर्वदो माधवः
गङ्गां हरिणाहितशक्तिनेत्यादिशब्देषु परस्परवि
पदभङ्गमपेक्ष्य नानार्थक्रोडीकारात्सभङ्गः श्लेष इति ।
सभङ्गश्लेषः शब्दालङ्कारः । अभङ्गश्लेषस्त्वर्थालङ्कार
केचित् । उभयमपि शब्दालङ्कार इत्यन्ये । उभयमप्यर्थ
ङ्कार इति स्वाभिप्रायः । एतद्विवेचनं तु चित्रमीमांस
द्रष्टव्यम् ॥ ६३ ॥ ६४ ॥

( अ० चं० )-नन्वत्रापि सममित्यस्य तुल्यार्थत्वात्साधर्म्यनिबन्धोऽ
कुतो न श्लेषाक्षेपस्तत्राह-सममिति ॥ द्राक् शीघ्रं साम्यार्थं साम्
कत्वम् । तथा चानुपपत्त्यभावात्तन्मूलक आक्षेपो न सम्भवतीति भा
कथं तर्हि तदवगमस्तत्राह-अर्थसौन्दर्येति ॥ विशेषणानां वधूभि
चमत्कृतेरनुसन्धानात्तदन्वयतात्पर्यग्रह इति भावः । तदनु श्लेषा
न्धानानन्तरम् । तद्बलाच्छ्लेषबलात् ॥ साधर्म्यार्थेति । साधर्म्यरू
स्येत्यर्थः । अर्थसाम्याभावेऽपि सकलकलं पुरमेतज्जातं सम्प्रति सुधां
म्बमिवेत्यादिवच्छब्दसाम्यस्य सम्भवादिति भावः । एवकारेण व्य
त्वव्यवच्छेदः । तत्र तयोर्मध्ये ॥ शब्देति । जतुकाष्ठन्यायेन शब्दयो
श्लिष्टत्वादिति भावः । अर्थेति शब्दाभेदादेकवृन्तगतफलद्वयन्याये
योरेव श्लिष्टत्वादिति भावः । केचिदलङ्कारसर्वस्वकारादयः ॥ उ
मपीति । सभङ्गाभङ्गश्लेषद्वयमपीत्यर्थः । शब्दस्य परिवृत्त्यसह
न्वयव्यतिरेकाभ्यां तद्गतत्वावधारणादिति भावः । अन्ये मम्मटभ
नन्वभिप्रायस्यार्थालङ्कारमध्यकथनादवगतस्यापि विशेषतः कथनम
रेण कथमुपपत्तिरित्याशङ्क्याह--एतदिति ॥ यद्यप्युत्प्रेक्षाग्रन्थान
चित्रमीमांसा न क्वापि दृश्यते तथाप्ययमाशय उन्नीयते । चमत्कार
मुखप्रेक्षित्वादर्थालङ्कारत्वमिति । अनुप्रासयमकादेस्तु न चमत्कार
मुखप्रेक्षित्वमिति न तेषामर्थालङ्कारत्वमपि तु शब्दवैचित्र्याच्छब्दाल
रत्वमेवेति ॥ ६३ ॥ ६४ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां श्लेषालङ्कारप्रकरणम् ॥

## अप्रस्तुतप्रशंसालङ्कारः २७.

(चन्द्रा०)–अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया ।
एकः कृती शकुन्तेषु योन्यं शक्रान्न याचते ॥६६॥

(कुव०)–यत्राप्रस्तुतवृत्तान्तवर्णनं प्रस्तुतवृत्तान्तावगतिपर्यवसायि तत्राप्रस्तुतप्रशंसालङ्कारः । अप्रस्तुतवृत्तान्तवर्णनेन प्रस्तुतावगतिश्च प्रस्तुताप्रस्तुतयोः सम्बन्धे सति भवति । सम्बन्धश्च सारूप्यं सामान्यविशेषभावः कार्यकारणभावो वा सम्भवति । तत्र सामान्यविशेषभावे सामान्याद्विशेषस्य विशेषाद्वा सामान्यस्यावगतौ द्वैविध्यम् । कार्यकारणभावेऽपि कार्यात्कारणस्य कारणाद्वा कार्यस्यावगतौ द्वैविध्यम् । सारूप्यात्तु एको भेद इत्यस्याः पञ्च प्रकाराः । यदाहुः–

"कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥" इति ।

तत्र सारूप्यनिबन्धनाऽप्रस्तुतप्रशंसोदाहरणम् । एकः कृतीति । अत्राप्रस्तुतचातकस्य प्रशंसा प्रशंसनीयत्वेन प्रस्तुते तत्सरूपे क्षुद्रेभ्यो याचनान्निवृत्ते मानिनि पर्यवस्यति ।

यथा वा–आबद्धकृत्रिमसटाजटिलांसभित्ति-
रारोपितो मृगपतेः पदवीं यदि श्वा ।
मत्तेभकुम्भतटपाटनलम्पटस्य
नादं करिष्यति कथं हरिणाधिपस्य ॥

अत्र शुनकस्य निन्दा निन्दनीयत्वेन प्रस्तुते तत्सरूपे कृत्रिमवेषव्यवहारमात्रेण विद्वत्ताभिनयवति वैधेये पर्यवस्यति ॥

८

( अ०चं० )-अप्रस्तुतेति ॥ सा अप्रस्तुतप्रशंसा प्रस्तुताश्रया प्रस्तुताश्रयः प्राधान्येन तात्पर्यविषयो यस्यास्तथाभूता । प्रस्तुतपरमप्रस्तुतवर्णनमप्रस्तुतप्रशंसेत्यर्थः ॥ एक इति । कृती कुशलः । शकुन्तेषु पक्षिषु मध्ये यश्चातकः शक्रादिन्द्रादन्यं न याचत इत्यर्थः ॥ कार्यं इति । कार्ये प्रस्तुते सति तदन्यस्य कारणस्य । वचः प्रतिपादनं निमित्ते प्रस्तुते सति तदन्यस्य कार्यस्य । एवं सामान्ये प्रस्तुते सति तदन्यस्य विशेषस्य । विशेषे प्रस्तुते सति तदन्यस्य समान्यस्य । प्रस्तुते तदन्यस्य तत्सदृशस्येत्यर्थः । अन्यशब्दस्य प्रतिसम्बन्धित्वात् । तत्सरूपे तत्सदृशे ॥ आबद्धेति । आबद्धाः याः कृत्रिमाः स्कन्धलोमानि तैर्जटिला व्याप्ता अंसभित्तिः स्कन्धदेशो यस्य श्वा शुनको मृगपतेः सिंहस्य पदवीं स्थानं यद्यारोपितः । ता... टायुक्तत्वेन सिंहसाम्यं प्रापित इत्यर्थः । तथापि मत्तानामिभानां कुम्भतटस्य पाटने विदारणे लम्पटस्य व्यसनिनो हरिणानामि... नादं सिंहनादं कथं करिष्यतीत्यर्थः । अभिनयवत्यनुकुर्वतीति ... न्तम् । वैधेये मूर्खे । 'मूर्खवैधेयबालिशाः' इत्यमरः ॥

( कुव० )-यथा वा-

> अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः ।
> कथं कमलनालस्य मा भूवन्भङ्गुरा गुणाः ॥

अत्र कमलनालवृत्तान्तकीर्तनं तत्सरूपे बहिः खले... जाग्रत्सु भ्रातृपुत्रादिभिरन्तः कलहं कुर्वाणे पुरुषे ... स्यति । एवं च लक्ष्यलक्षणयोः प्रशंसाशब्दः स्तुति... स्वरूपाख्यानसाधारणकीर्तनमात्रपरो द्रष्टव्यः ।

सामान्यनिबन्धना यथा-

> विधाय वैरं सामर्षे नरोऽरौ य उदासते ।
> प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥

अत्र प्रागेव सामर्षे शिशुपाले रुक्मिणीहरणाद्वैरं ... कृतवता कृष्णेन तस्मिन्नुदासितुमयुक्तमिति वक्त... प्रस्तुते तत्प्रत्यायनार्थं सामान्यमभिहितम् ।

( अ०चं० )-अन्तरिति ॥ छिद्राणि रन्ध्राणि दोषस्थानानि च । क... शूकाः खलाश्च । भङ्गुरा भङ्गशीलाश्च । गुणाः सौभाग्यादयस्तन्त...

अत्र स्तुतिनिन्दोदासीनस्वरूपाख्यानमात्रमिति श्लिष्टविशेषणत्वमिति व भेदः ॥ एवं चेति । उक्तोदाहरणेषु प्रस्तुतपरस्याप्रस्तुतवर्णनस्य विरूपत्वे सतीत्यर्थः ॥ विधायेति । ये नरा मनुष्याः सक्रोधेऽरौ शत्रौ वैरं विधायोदासीना भवन्ति ते कक्षे तृणे उदर्चिषमग्निं निक्षिप्याभिमारुतं पवनाभिमुखं शेरते निद्रां कुर्वन्तीत्यर्थः ॥

(व० )-यथा वा-सौहार्दस्वर्णरेखाणामुच्चावचभिदाजुषाम् ।
परोक्षमिति कोऽप्यस्ति परीक्षानिकषोपलः ॥

अत्र यदि त्वं प्रत्यक्षमिव परोक्षेऽपि मम हितमाचरसि तदा त्वमुत्तमः सुहृदिति विशेषे वक्तव्यत्वेन प्रस्तुते सामान्यमभिहितम् ।

विशेषनिबन्धना यथा-

अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ।
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥

अत्र कृष्णं प्रति बलभद्रवाक्ये मार्दवदूषणपरे पूर्वप्रस्तावानुसारेण क्रूर एव ख्यातिभाग्भवति न तु मृदुरिति सामान्ये वक्तव्ये तत्प्रत्यायनार्थमप्रस्तुतो विशेषोऽभिहितः । एवं बृहत्कथादिषु सामान्यतः कञ्चिदर्थं प्रस्तुत्य तद्विवरणार्थमप्रस्तुतकथाविशेषोदाहरणेष्वियमेवाप्रस्तुतप्रशंसा द्रष्टव्या ।

कारणनिबन्धना यथा-

हृतसारमिवेन्दुमण्डलं
दमयन्तीवदनाय वेधसा ।
कृतमध्यबिलं विलोक्यते
धृतगम्भीरखनीखनीलिम ॥

अत्राप्राकरणिकेन्दुमण्डलगततयोत्प्रेक्ष्यमाणेन दमयन्तीवदननिर्माणार्थं सारांशहरणेन तत्कार्यरूपं वर्णनीयतयाप्रस्तुतं दमयन्तीवदनगतलोकोत्तरं सौन्दर्यं प्रतीयते ।

(अ०चं०)-सौहार्देति ॥ सौहार्दानि मैत्राण्येव स्वर्णरेखा इति रूपकम् । तासां परीक्षणे निकषोपलः परोक्षमिति संज्ञितः कोऽप्यस्तीत्यन्वयः ॥ अङ्केति ।

मृगलाञ्छन इत्युच्यत इति शेषः । निष्ठुरं क्षिप्तानि निरस्तानि यूथानि येन तादृशः केसरी सिंहो मृगाधिप इत्युच्यत इति शे... ह्वतेति । धृतो गम्भीरायां खन्यां गर्ते खस्याकाशस्य नीलिमा ये... मण्डलविशेषणम् ॥

( कुव० )–यथा वा–मदीये वरदराजस्तवे–

आश्रित्य नूनममृतद्युतयः पदं ते
देहक्षयोपनतदिव्यपदाभिमुख्याः ।
लावण्यपुण्यनिचयं सुहृदि त्वदास्ये
विन्यस्य यान्ति मिहिरं प्रतिमासभिन्नाः ॥

अत्राप्राकरणिकचन्द्रकर्तृकतयोत्प्रेक्ष्यमाणेन लावण्यनिचयविन्यासेन कारणेन तत्कार्यमनन्तकोटि लावण्यशालित्वमनन्यमुखसाधारणं भगवन्मुखे वर्ण्‍यतया प्रस्तुतं प्रतीयते। तथा हि चन्द्रस्तावन्मन्त्रालि... द्विक्षयाभ्यामभेदेऽपि भेदाध्यवसायाद्वा प्रतिमासं भि... त्वेन वर्णितस्तेनातीताश्चन्द्रा अनन्तकोटय इति ल... कालस्यानादित्वात्सर्वेषां च तेषामाकाशसमाश्रयणं महिम्ना भगवच्चरणसमाश्रयत्वेनाध्यवसितम्। भगव... प्रपन्नानां च देहक्षयोपस्थितौ परमपदप्राप्त्याभि... तदानीमेव स्वसुहृद्वर्गे स्वकीयसुकृतस्तोमनिवेशनं सूर्यमण्डलप्राप्तिश्चेत्येतत्सर्वं श्रुतिसिद्धमिति । तद... धेन तेषां देहक्षयकालस्यामावास्यारूपस्योपस्थितौ मण्डलप्राप्तेः प्राक्प्रत्यक्षसिद्धं पुण्यत्वेन निरूपि... लावण्यस्य प्रहाणं निमित्तीकृत्य तस्य चन्द्रसादृश्य... रूपोपचरिततत्सौहार्दवति भगवन्मुखे न्यसनमुत्प्रेक्षि... यद्यपि सुहृद्बहुत्वे तावदल्पपुण्यसङ्क्रमो भवति त... अत्र सुहृदित्येकवचनेन भगवन्मुखमेव चन्द्रस्य सुहृ... मुखान्तराणि चन्द्रसादृश्यगंधस्यास्पदानीति भगव... स्येतरमुखेभ्यो व्यतिरेकोऽपि व्यञ्जितः। ततश्च तासि...

सर्वेषां स्वस्वयावल्लावण्यविन्यसनोत्प्रेक्षणेन प्राग्वर्णितः प्रस्तुतोर्थः स्पष्टमेव प्रतीयते । यद्यपि श्रुतौ सूर्यमण्डलप्राप्त्यनन्तरभाविविरजानदीक्रमणानन्तरमेव सुहृत्सुकृतसंक्रमणं श्रूयते तथाऽपि शारीरकशास्त्रे तस्यार्थवशात्प्राग्भावः स्थापित इति तदनुसारेण विन्यस्य मिहिरं प्रति यान्तीत्युक्तम् ॥

[का]र्यनिबन्धना यथा—

> नाथ त्वदङ्घ्रिनखधावनतोयलग्ना-
>     स्तत्कांतिलेशकणिका जलधिं प्रविष्टाः ।
> ता एव तस्य मथनेन घनीभवन्त्यो
>     नूनं समुद्रनवनीतपदं प्रपन्नाः ।

अत्र भगवत्पादाम्बुजक्षालनरूपायां दिव्यसरित्यलक्तकरसादिवल्लग्नानां तया सह समुद्रं प्रविष्टानां तन्नखकान्तिलेशकणिकानां परिणामतया सम्भाव्यमाने समुद्रनवनीतपदवाच्येन चन्द्रेण कार्येण तन्नखकान्त्युत्कर्षः प्रतीयते ॥

(अ०चं० )–आश्रित्येति ॥ हे देव ! प्रतिमासं भिन्ना अमृतद्युतयश्चन्द्रास्ते विष्णोः पदमाकाशमेव पदं चरणमाश्रित्य देहस्य क्षये उपनतं सम्पन्नं दिव्यपदस्याभिमुखत्वं येषामेवंभूताः सन्तस्त्वदास्यरूपे सुहृदि मित्रे नूनं लावण्यस्वरूपस्य पुण्यस्य निचयं विन्यस्य मिहिरं सूर्यं प्रति यान्तीत्यन्वयः ॥ मन्त्रलिङ्गादिति । नवो नवो भवति जायमान इत्यादिमन्त्रसामर्थ्यादित्यर्थः । मन्त्रस्य मानान्तरसिद्धार्थानुवादकत्वादाह–वृद्धीति ॥ श्रुतीति । "तत्सुकृतदुष्कृते विधुनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतम्" इति कौषीतकी श्रुतिः । "स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छतीति स वायुमागच्छति स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इति च श्रुतौ स आदित्यमागच्छतीत्यनन्तरं "स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधुनुते" इति श्रुतौ । शारीरकेति । शरीरे भवः शारीरः स एव शारीरक आत्मा तत्प्रतिपादके इत्यर्थः । अर्थवशात्प्रयोजनवशात् । पूर्वं पापादित्यागाभावेऽर्चिरादिमार्गप्राप्तिपूर्वकब्रह्मप्राप्तेरसम्भवेन पाठक्रमस्यार्थक्रमेण बाधादिति

भावः ॥ स्थापित इति । साम्पराये तर्तव्याभावात्तथा ॥ तृ तार्तीयाधिकरणे सिद्धान्तित इत्यर्थः ॥ नाथेति । हे नाथ विष्णो रणनखक्षालनजले गङ्गारूपे लग्नाः तेषां नखानां कान्तिलेशा समुद्रं प्राप्ताः । ता एव च कणिकास्तस्य जलधेर्मथनेन सान्द्रता नूनं समुद्रसम्बन्धिनवनीतस्य चन्द्रस्य पदं प्राप्ताः । चन्द्र परिणता इत्यर्थः । तया तद्द्वारेण तदित्यनन्तरं हेतुरिति शेषः .तुनखकान्त्युत्कर्ष इत्यर्थः ॥

( कुवल० )–यथा वा–

अस्याश्चेद्गतिसौकुमार्यमधुना हंसस्य गर्वैरलं
सँल्लापो यदि धार्यतां परभृतैर्वाचंयमत्वव्रतम् ।
अङ्गानामकठोरता यदि दृषत्प्रायैव सा मालती
कान्तिश्चेत्कमला किमत्र बहुना काषायमालम्बता

अत्र नायिकागतिसौकुमार्यादिषु वर्णनीयत्वेन तेषु हंसादिगतगर्वशान्त्यादिरूपाण्यौचित्येन सम्भा मानानि कार्याण्यभिहितानि । एतानि च पूर्वोदा इव न वस्तुकार्याणि किन्तु तन्निरीक्षणकार्याणि ।

"लज्जा तिरश्चां यदि चेतसि स्या-
दसंशयं पर्वतराजपुत्र्याः ।
तं केशपाशं प्रसमीक्ष्य कुर्यु-
र्वालप्रियत्वं शिथिलं चमर्यः ॥"

इत्युदाहरणान्तरे तथैव स्पष्टम् । अङ्गानामकठोर तृतीयपादे तु वर्णनीयाङ्गसौकुमार्यातिशयन्निरीक्षण त्वमपि नार्थाक्षिप्यमालतीकठोरत्वे विवक्षितम् । योगिविशेषापेक्षकठोरत्वस्य तदकार्यत्वात्किन्तु तद रेव । इदमपि त्वदङ्गमार्दवे दृष्ट इत्याद्युदाहरणान्तरे स्पष्टम् ॥ अर्थस्य कार्यत्व इव बुद्धेः कार्यत्वेपि कार्या न्धनत्वं न हीयत इति । एतादृशान्यपि कार्यनिबन्ध प्रस्तुतप्रशंसायामुदाहृतानि प्राचीनैः । वस्तुतस्तु तद रेकेपि न दोषः । न ह्यप्रस्तुतप्रशंसायां प्रस्तुताप्रस्तुत

**पञ्चविध एव सम्बन्ध इति नियन्तुं शक्यते । सम्बन्धान्तरेष्वपि दर्शनात् ॥**

(अ० चं० )--अस्या इति । अस्याः कामिन्याः गतिसौकुमार्यं दृष्टं चेदित्यध्याहारेणान्वयः । एवं सँल्लापो भाषणं यदि श्रुतस्तदा परभृतैः कोकिलैः वाचं यच्छतीति तथा तस्य भावो मौनमेव व्रतं धार्यतां साध्यताम् । अकठोरता मार्दवं यदि दृश्यते तदा सा प्रसिद्धा मालती दृषत्प्रायैव पाषाणतुल्यैव लक्ष्यत इति । कान्तिर्दृष्टा चेत्तदा कमला लक्ष्मीः काषायं वस्त्रमालम्बतामाश्रयतु । किमत्र बहुनोक्तेनेत्यन्वयः । गत्यादिषु गतिसौन्दर्यादिषु । सम्भाव्यमानान्युत्प्रेक्षमाणानि । पूर्वोदाहरणाद्वैलक्षण्यमाह--एतानीति । कार्याणीत्यर्थः ॥ लज्जेति । तिरश्चां पश्वादीनां चेतसि यदि लज्जा स्यात्तदा चमर्यो गोमृगाः पर्वतराजपुत्र्यास्तं तथा रमणीयं केशपाशं प्रसमीक्ष्य वालाः केशाः प्रिया यासां तास्तथा तत्त्वं शिथिलं कुर्युरित्यन्वयः । तथैव निरीक्षणकार्यत्वमेव ॥ अर्थाक्षेप्येति । दृषत्प्रायत्वरूपार्थाक्षिप्तेत्यर्थः । इदमप्यप्रस्तुतबुद्धेः कार्यत्वमपि । अपिना प्रस्तुतबुद्धेः कारणत्वं प्रागुक्तं समुच्चीयते । " त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते । मालतीशशभृल्लेखाकदलीनां कठोरता ॥ " इति तुल्ययोगितायां प्रागुदाहृतम् । ननु कार्यरूपेणाप्रस्तुतेनार्थेन यत्र प्रस्तुतं तत्कारणमवगम्यते सा कार्यनिबन्धना अप्रस्तुतप्रशंसोच्यते । न चोदाहृतेषु तत्सम्भवः । मालतीकठोरत्वादेरप्रस्तुतस्यार्थस्याकार्यतायास्त्वयैव दर्शितत्वात् । एवं प्रस्तुतस्य कामिनीगतिनिष्ठसौन्दर्यातिशयादेर्निरीक्षणस्येव कारणत्वेन स्वरूपतस्तस्याकारणत्वादित्यत आह--अर्थस्येति ॥ अयमाशयः अर्थस्याप्रस्तुतत्वे सुतरां तद्बुद्धेरप्रस्तुतत्वात्कार्यत्वाच्च न तावदप्रस्तुतकार्यत्वांशासम्भवः । अर्थत्वस्य प्रयोजनाभावेन लक्षणेऽनिवेशादव्यावर्तकत्वाच्च । नापि प्रस्तुतस्य कारणत्वांशस्यासम्भवः । स्वरूपतस्तस्याहेतुत्वेऽपि ज्ञानस्य हेतुत्वादिति । ननु गतिसौन्दर्यादेर्ज्ञानमेव हेतुर्न तु ज्ञायमानं गतिसौन्दर्यादि । तदभावेऽपि ज्ञानमात्रात्कार्योत्पत्तेरित्यस्वरसादाह--वस्तुतस्त्विति ॥ तदतिरेके तस्याः प्राचीनोदाहृताप्रस्तुतप्रशंसाया अतिरेके प्रकारपञ्चकाधिक्ये ॥

**( कुवलयानन्दः )--यथा--**

**तापत्रयौषधवरस्य तव स्मितस्य**
**निःश्वासमन्दमरुता निबुसीकृतस्य ।**

एते कडंकरचया इव विप्रकीर्णा
जैवातृकस्य किरणा जगति भ्रमन्ति ॥

अत्र ह्यप्रस्तुतानां चन्द्रकिरणानां भगवन्मन्दस्मित... पदिव्यौषधधान्यविशेषकडङ्करचयस्योत्प्रेक्षणेन भगव... न्दस्मितस्य तत्सारतारूपः कोऽप्युत्कर्षः प्रतीयते । न... धान्यकडङ्करचययोः कार्यकारणभावादिसम्बन्धोऽस्ति... अतः सहोत्पत्त्यादिकमपि सम्बन्धान्तरमाश्रयणीयमेव... एवमुपमानोपमेयावाश्रित्य तत्र कविकल्पितकार्यका... णभावनिबन्धने अप्रस्तुतप्रशंसे दर्शिते । ततोऽन्यत्र... दृश्यते । यथा–

कालिन्दि ब्रूहि कुम्भोद्भव जलधिरहं नाम गृह्णासि कस्मा... च्छत्रोर्मे नर्मदाहं त्वमपि वदसि मे नाम कस्मात्सपत्न्या... मालिन्यं तर्हि कस्मादनुभवसि मिलत्कज्जलैर्मालवीनां नेत्रा... म्भोभिः किमासां समजनि कुपितः कुन्तलक्षोणिपालः ॥

अत्र किमासां समजनीति मालवीनां तथा रोदन... निमित्ते पृष्टे तत्प्रियमरणरूपनिमित्तमनाख्याय कुपि... कुन्तलक्षोणिपाल इति तत्कारणमभिहितमिति कार... निबन्धना । मालवान्प्रति प्रस्थितेन कुन्तलेश्वरेण कि... नाशिता इति पृष्टे तद्वधानन्तरभावि जलधिनर्मदाप्र... त्तररूपं कार्यमभिहितमित्यत्रैव कार्यनिबन्धनापि पूर्वस... प्रश्नः शाब्दोऽस्यामार्थ इति भेदः ॥ ६५ ॥

( अ०चं० )–तापेति ॥ हे हरे तव निःश्वासरूपमन्दमारुतेन निर्बुसी... तस्य बुसरहितीकृतस्य स्मितरूपस्याऽऽध्यात्मिकादितापत्रयौषधश्रे... विप्रकीर्णाः कडङ्करचयाः बुससमूहा इवैते जैवातृकस्य चन्द्रस्य कि... रणा जगति भ्रमन्तीत्यन्वयः । तत्सारतारूपः किरणसारतारूप... एवमिति । हृतसारमित्युदाहरणे चन्द्रवदने उपमानोपमेयपदार्था... श्रित्य चन्द्रसारांशहरणस्य सतः कविप्रौढोक्तिकल्पितं कारणत्व...

एवमन्येष्वपि द्रष्टव्यम् ॥ कालिन्दीति । नर्मदायाः समुद्रस्य च संवादोऽयम् । तत्र यमुनाभ्रान्त्या समुद्रेण कालिन्दीत्युक्ते कोपात्साकूतं नर्मदाया उत्तरम् । हे कुम्भोद्भवागस्त्यमुने ब्रूहीति । ततः पुनः समुद्रस्य प्रतिवचनम् । अहं जलधिर्भवामि मम शत्रोर्नाम कस्माद्धेतोर्गृह्णासीति । सा पुनराह नर्मदाहमित्यादि । ततः समुद्रः पुनराह । तर्हि कुतो मालिन्यमनुभवसीति । सा पुनराह । मिलत्कज्जलैर्मालवदेशाङ्गनानां नेत्राश्रुभिरिति । ततः किमासां जातमिति समुद्रस्य प्रश्नः । कुन्तलदेशाधिपः कुपित इति नर्मदाया उत्तरम् ॥ ६५ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामप्रस्तुतप्रशंसालङ्कारप्रकरणम् ॥ २७ ॥

---

## प्रस्तुताङ्कुरालङ्कारः २८.

(चन्द्रा० )–प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुतांकुरः ।
किं भृङ्ग सत्यां मालत्यां केतक्या कण्टकेद्धया ॥६६॥

(कुव० )–यत्र प्रस्तुतेन वर्ण्यमानेनाभिमतमन्यत्प्रस्तुतं द्योत्यते तत्र प्रस्तुतांकुरालङ्कारः । उत्तरार्द्धमुदाहरणम् । इह प्रियतमेन साकमुद्याने विहरन्ती काचिद्भृङ्गं प्रत्येवाहेति वाच्यार्थस्य प्रस्तुतत्वम् । न चानामन्त्रणीयामन्त्रणेन वाच्यासम्भवादप्रस्तुतमेव वाच्यमिह स्वरूपप्रस्तुतावगतये निर्दिष्टमिति वाच्यम् । मौग्ध्यादिना भृङ्गादावप्यामन्त्रणस्य लोके दर्शनात् ॥

(अ०चं० )–प्रस्तुतेनेति ॥ प्रधानभूतप्रस्तुतान्तराभिव्यञ्जकं प्रस्तुतवर्णनं प्रस्तुताङ्कुरालङ्कारः । प्रस्तुतस्याभिव्यञ्जकत्वादङ्कुर इवाङ्कुर इति व्युत्पत्तेः ॥ किमिति । हे भ्रमर मालत्यां विद्यमानायां कण्टकेद्धया कण्टकव्याप्तया केतक्या किं प्रयोजनमिति प्रस्तुतेन भ्रमरवृत्तान्तेन मयि मनोहारिण्यां सत्यां किमुद्वेगकारिण्या परवनितयेति नायकवृत्तान्तः प्राधान्येन प्रस्तुतोऽभिव्यज्यते । कथमिह भृङ्गवृत्तान्तस्य प्रस्तुतत्वं तत्राह–इहेति । तथा च भृङ्गसम्बोध्यकत्वात्तद्वृत्तान्तोपि प्रस्तुत इति भावः । अनामन्त्रणीयामन्त्रणेन सम्बोध्यत्वायोग्यसम्बोधनेन । वाच्यासम्भवाद् भृङ्गसम्बोध्यकवाच्यार्थासम्भवात् ॥

( कुव० )-यथा-

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरणी मार्गस्थितस्यापि मे ॥

इत्यत्र चेतनाचेतनप्रश्नोत्तरवर्त्तिर्यगामन्त्रणस्या-
मसम्भावितत्वाभावात् । एवं प्रस्तुतेन वाच्यार्थेन भृङ्गो-
लम्भरूपेण वक्र्याः कुलवध्वाः सौन्दर्याभिमानशालि-
क्रूरजनपरिवृत्तिदुष्प्रधर्षायां परवनितायां विटसर्वस्व-
हरणसङ्कल्पदुरासदायां वेश्यायां वा कण्टकसंकुलके-
कल्पायां प्रवर्त्तमानं प्रियतमं प्रत्युपालम्भो द्योत्यते ।

यथा वा-अन्यासु तावदुपमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।
बालामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमल्लिकायाः ॥

अत्राप्युद्यानमध्ये चरन्तं भृङ्गं प्रत्युपालम्भ इति
च्यार्थस्यापि प्रस्तुतत्वम् । इदं च प्रौढाङ्गनासु स-
बालिकां रतये क्लेशयति कामिनि शृण्वति कस्याश्चि-
दग्धाया वचनमिति तं प्रत्युपालम्भो द्योत्यते ॥

( अ०चं० ) कस्त्वमिति । शाखोटकतरुं प्रति कस्यचित्पथिकस्य प्रश्नः ।
कथयामीत्याद्युत्तरम् । वैराग्यादिव वदसीति पुनः प्रश्नः ।
विदितमिति शाखोटकस्योत्तरम् । कस्मादिदं वैराग्यमिति पुनः प्र-
कथ्यत इति पुनरुत्तरं प्रतिज्ञाय शाखोटक आह । वामभागेनोपल-
तोऽत्र वटोऽस्ति तं पान्थो जनः सर्वात्मना समित्पत्रच्छायादिभिः सं-
आश्रयति । मम पुनर्मार्गे स्थितस्यापि न छायापि परोपकार-
दिकेति भूताधारत्वादिति भावः । वामेनेति मार्गेति च श्लिष्टम् ।
त्यन्तमारोपेणापि । परवनितायामिति वेश्यायामिति च विषयसप्त-
तद्विषय इत्यर्थः । विटानां सर्वस्वाहरणे यः सङ्कल्पस्तेन दुरा-
वेश्याविशेषणम् ॥ अन्येति । हे भृङ्ग अन्यासूपमर्दक्षमासु सुमन-

ष्पाणां लतासु तावद्यावन्नवमल्लिकायाः कलिका सञ्जातरजस्का भवति लोलं चपलं मनो विनोदय । लोलमिति क्रियाविशेषणं वा । नवमल्लिकाया लताविशेषस्य बालामभिनवामसञ्जातरजस्कां कलिकामकाले व्यर्थं किमिति कदर्थयसि पीडयसीत्यन्वयः । रजः पुष्परजः स्त्रीणां रेतश्च ॥ शृण्वतीति । एतद्वचनं शृण्वति सतीत्यर्थः ॥

(कुवल० )-यथा वा—

कोशद्वन्द्वमियं दधाति नलिनी कादम्बचञ्चुक्षतं
धत्ते चूतलता नवं किसलयं पुंस्कोकिलास्वादितम् ।
इत्याकर्ण्य मिथः सखीजनवचः सा दीर्घिकायास्तटे
चैलान्तेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना ॥

अत्रेयमिति नलिनीव्यक्तिविशेषनिर्देशेन दीर्घिकायास्तट इत्यनेन च वाच्यार्थस्य प्रस्तुतत्वं स्पष्टम् । प्रस्तुतान्तरद्योतनं चोत्तरार्द्धे स्वयमेव कविनाविष्कृतम् । अत्राद्योदाहरणयोरन्यापदेशध्वनिमाह लोचनकारः ।

अप्रस्तुतप्रशंसायां वाच्यार्थोऽप्रस्तुतत्वादवर्णनीय इति । तत्राभिधायामपर्यवसितायां तेन प्रस्तुतार्थव्यक्तिरलङ्कारः । इह तु वाच्यस्य प्रस्तुतत्वेन तत्राभिधायां पर्यवसितायामर्थसौन्दर्यबलेनाभिमतार्थव्यक्तिर्ध्वनिरेवेति । वस्तुतस्त्वयमप्यलङ्कार एव ध्वनिरिति व्यवस्थापितं चित्रमीमांसायाम् । तृतीयोदाहरणस्य त्वलङ्कारत्वे कस्यापि न विवादः । उक्तं हि ध्वनिकृता—

"शब्दार्थशक्त्याक्षिप्तोपि व्यङ्ग्योऽर्थः कविना पुनः ।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः ॥" इति ।

एतान्यपि सारूप्यनिबन्धनान्युदाहरणानि सम्बन्धान्तरनिबन्धनान्यपि कथंचिद्वाच्यव्यङ्ग्ययोः प्रस्तुतत्वनिबन्धनेनोदाहरणीयानि । दिङ्मात्रमुदाह्रियते ॥

(अ०चं० )-कोशेति ॥ इयं नलिनी कमलिनी कोशद्वन्द्वं मुकुलयुगलं कादम्बस्य हंसस्य चञ्च्वा क्षतं कृतक्षतं दधाति धत्ते तथेयं चूतस्याम्रस्य

लता नूतनं पल्लवं पुंरूपैः कोकिलैरास्वादितं चर्वितं धत्ते इति ... काया वाप्यास्तटे मिथः परस्परं सखीजनस्य वच आकर्ण्य सा ... नायिका कमलमुकुलाम्रपल्लवव्याजेनैता मदीयस्तनाऽधरक्षतवृत्तान्तं कथयन्तीति ज्ञात्वा चैलस्य वस्त्रस्यान्तेन प्रान्तेन स्तनतटं तिरो... बिम्बरूपमधरं च पाणिना तिरोदध आच्छादितवतीत्यन्वयः ॥ ... पदेशेति । अन्यस्यापदेशो मिषं यत्र तादृशमित्यर्थः । तदीयमेव ... दर्शयति–अप्रस्तुतेत्यादि ॥ व्यवस्थापितमिति । प्रस्तुतत्वेऽपि ... तया तात्पर्याभावादत्राप्यभिधापर्यवसानाभावादिति भावः ॥ ... वेति । सा अलङ्कृतिर्ध्वनेः सकाशादन्यैवेत्यर्थः । प्रस्तुतत्वला... प्रस्तुतत्वप्राप्त्या ॥

( कुव० )–रात्रिः शिवा काचन सन्निधत्ते
विलोचने जाग्रतमप्रमत्ते ।
समानधर्मा युवयोः सकाशे
सखा भविष्यत्यचिरेण कश्चित् ॥

अत्र शिवसारूप्यमिव तदेकदेशतया तद्वाच्यं ल... लोचनमपि शिवरात्रिमाहात्म्यप्रयुक्तत्वेन वर्णनीय... तन्मुखेन कृत्स्नं शिवसारूप्यं गम्यम् । यथा वा–

वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर–
त्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् ।
तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी–
परीवाहस्रोतःसरणिरिव सीमन्तसरणिः ॥

अत्र वर्णनीयत्वेन प्रस्तुतायाः सीमन्तसरणेर्वदनसौन्... परीवाहत्वोत्प्रेक्षणेन परिपूर्णतटाकवत्परीवाहकारणी... स्वस्थाने अमान्ती वदनसौन्दर्यसमृद्धिः प्रतीयते । सा... वर्णनीयत्वेन प्रस्तुतैव ॥

( अ०चं० )–रात्रिरिति ॥ हे विलोचने शिवा कल्याणरूपा काचनानिर्व... नीयप्रभावा रात्रिः शिवरात्रिरित्यर्थः सन्निधत्ते सन्निहिता भव... युवाम् अप्रमत्ते जाग्रतं जाग्रद्रूपे भवतम् । कुतस्तत्राह । युवयोः स... समीपे अचिरेण समानधर्मा सदृशः सखा कश्चिद्भविष्यति । ... लोचनं भाले भविष्यतीत्यर्थः । तदेकदेशतयेति शिवरात्रिमाहात्म्य...

कत्वे हेतुः । तच्च वर्ण्यते । तद्वाच्यमुदाहृतकाव्यवाच्यम् । एवं चैकदेैकदेशभावसम्बन्धनिबन्धनत्वमत्र दर्शितम् ॥ वहन्तीति । भगवत्याः सीमन्तवर्णनमिदम् । अयि शिवे तव सीमन्तसरणिर्नः क्षेमं तनोत्वित्यन्वयः । कीदृशी । सिन्दूरं वहन्ती । किमिव । प्रबलानां केशपाशरूपान्धकारदीप्तीनां समूहैर्वन्दीकृतं बालार्ककिरणमिव सरणिः । केव । त्वद्वदनसौन्दर्यलहरीणां परीवाहरूपा स्रोतःसरणिरिवेति । परीवाहो जलनिर्गममार्गः । 'जलोच्छ्वासाः परीवाहाः' इत्यमरः ॥

(कुव० )-यथा वा-

अङ्गासङ्गिमृणालकाण्डमयते भृङ्गावलीनां रुचं
नासामौक्तिकमिन्द्रनीलसरणिं श्वासानिलाद्गाहते ।
दत्तेयं हिमवालुकापि कुचयोर्धत्ते क्षणं दीपतां
तप्तायःपतिताम्बुवत्करतले धाराम्बु संलीयते ॥

अत्र नायिकाया विरहासहत्वातिशयप्रकटनाय सन्तापवत्कार्याणि मृणालमालिन्यादीन्यपि वर्णनीयत्वेन विवक्षितानीति तन्मुखेन सन्तापोऽवगम्यः । यत्र कार्यमुखेन कारणस्यावगतिरपि श्लोके निबद्धा न तत्रायमलङ्कारः किं त्वनुमानमेव । यथा-

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं प्रशिथिलभुजाक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति नलिनीपत्रशयनम् ॥

( अ०चं० )-अङ्गेति । विरहसन्तापवर्णनम् । अङ्गसम्बद्धं मृणालकाण्डं भृङ्गेभ्यो विशेषरहितां तत्समां रुचं कान्तिमयते प्राप्नोति, तापातिशयेन मलिनीभावात् । नासामौक्तिकं श्वासानिलादत्युष्णाद्धेतोरिन्द्रनीलमणेः पदवीं तत्साम्यं गाहते प्राप्नोति । तथा कुचयोर्दत्ता निहितेयं हिमवालुका कर्पूरं क्षणं दीपरूपतां धत्ते । एवं करतले धारारूपेण सिक्तं जलं तप्तायःपिण्डपतितजलवत्संलीयते । तापातिशयाच्छोषं प्राप्नोतीत्यर्थः । उदाहरणद्वयेपि कार्यनिबन्धनत्वं व्यक्तम् ॥ न तत्रायमिति । द्वयोरपि वाच्यत्वादिति भावः । अयमित्युपलक्षणम् । अप्रस्तुतप्रशंसाऽपि नेति बोध्यम् । किं कृतस्तर्हि तत्र चमत्कारोऽत आह-किं

त्विति ॥ परीति । रत्नावल्यां स्वविरहातुरायाः सागरिकायाः ... मुपगतस्य राज्ञ इयमुक्तिः । इदं बिसिनीपत्ररचितं शयनं कृशाङ्ग्याः ... सन्तापं वदत्यनुमापयति । किम्भूतम् । पीनस्तनजघनसङ्गादुभय... ऊर्ध्वाधोभागयोः परिम्लानं तनोः कृशस्य मध्यस्य परिमिलनं स... प्राप्य अन्तर्मध्यभागे हरितवर्णम् । एवं प्रकर्षेण शिथिलयोर्भुजयोः ... श्चालनैश्च व्यस्तः विषमीकृतो न्यासो रचना यस्य तादृशमिति ।

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां प्रस्तुताङ्कुरालङ्कारप्रकरणम् ॥ २८ ॥

---

## पर्यायोक्तालंङ्कारः २९.

**(चंद्रा०)-पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम् ।**
**नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ ॥ ६...**

( कुव० )-यदेव गम्यं विवक्षितं तस्यैव भङ्ग्यन्तरेण ... क्षितरूपादपि चारुतरेण केनचिद्रूपान्तरेणाभिधानं पर्यायोक्तम् । उत्तरार्द्धमुदाहरणम् । अत्र भगवान्वासु... स्वासाधारणरूपेण गम्यः राहुवधूकुचवैयर्थ्यकारक... रूपान्तरेण स एवाभिहितः ।

लोकं पश्यति यस्याङ्घ्रिः स यस्याङ्घ्रिं न पश्यति ।
ताभ्यामप्यपरिच्छेद्या विद्या विश्वगुरोस्तव ॥

अत्र गौतमः पतञ्जलिश्च स्वासाधारणरूपाभ्यां ग... रूपान्तराभ्यामभिहितौ ॥

(अ०चं०)--ननु प्रस्तुतकार्याभिधानमुखेन कारणस्य गम्यत्वमपि प्रस्तु... ङ्कुरविषयश्चेत्किं तर्हि पर्यायोक्तमित्याकाङ्क्षायामाह—पर्यायोक्तमिति ... वचः प्रतिपादनं भङ्ग्यन्तराश्रयं भङ्ग्यन्तरप्रकारकम् । लक्षणं ... ष्कुरुते--यदेवेति ॥ तथा च विवक्षितस्वप्रकारातिरिक्तेन चारु... रूपेण व्यङ्ग्यस्याभिधानं पर्यायोक्तमिति लक्षणम् । पर्यायेण भङ्ग्य... रेणोक्तमभिहितं व्यङ्ग्यं यत्रेति व्युत्पत्तेः । लक्षणे स्वपदं व्यङ्ग्यपर... म च व्यङ्ग्यस्यैव वाच्यत्वं निष्फलं विरुद्धं चेति वाच्यं, प्रकारभेदा... तदुक्तम्-"यदेवोच्यते तदेव व्यङ्ग्यं यथा तु व्यङ्ग्यं न तथोच...

इति । चारुतरेणेति विशेषणात् । 'नमो राहुशिरश्छेदकारिणे दुःखहारिणे' इत्यत्र न पर्यायोक्तप्रसङ्गः । स्वासाधारणरूपेण वासुदेवत्वेन । तु शिरश्छेदकारित्वरूपव्यङ्ग्यमादायैव पर्यायोक्तं वक्तुमर्हं न तु विशेषणसामर्थ्यलभ्यं वासुदेवत्वमादायेति । तदयुक्तम्, राहुशिरश्छेदकारित्वस्य वाच्यसिद्ध्यङ्गत्वेन तेनापि विवक्षितं व्यङ्ग्यं प्रधानभूतं वासुदेवत्वं तदादायैव तत्कथनौचित्यात् । राहुस्त्रीकुचनैष्फल्यकारिणे हरये नम इत्यत्र तु राहुशिरश्छेदकारित्वमेव विवक्षितं व्यङ्ग्यमिति युक्तं तदादाय पर्यायोक्तमिति विभावनीयम् ॥ लोकमिति । यस्याक्षपादस्याङ्घ्रिर्लोकं पश्यति अथ च स लोको यस्य पतञ्जलेः शेषावतारस्याङ्घ्रिं न पश्यति उरगत्वात् । ताभ्यामक्षपादपतञ्जलिभ्यामपरिच्छेद्या अनाकलनीया ॥

कुव० )–यथा वा–निवेद्यतां हन्त समापयन्तौ
शिरीषकोशम्रदिमाभिमानम् ।
पादौ कियद्दूरमिमौ प्रयासे
निधित्सते तुच्छदयं मनस्ते ॥

अत्र कियद्दूरं जिगमिषेति गम्य एवार्थो रूपान्तरेणाभिहितः । यथा वा–

देवं वन्दे जलधिशरधिं देवतासार्वभौमं
व्यासप्रष्ठा भुवनविदिता यस्य वाहाधिवाहाः ।
भूषापेटी भुवनमधरं पुष्करं पुष्पवाटी
शाटीपालाः शतमखमुखाश्चन्दनद्रुर्मनोभूः ॥

अत्र यस्य वेदा वाहा भुजङ्गमा भूषणानीत्यादि तद्वाक्यार्थव्यवस्थितौ वेदत्वाद्याकारेणावगम्या एव वेदादयो व्यासप्रमुखविनेयत्वाद्याकारेणाभिहिताः परं तु देवतासार्वभौमत्वस्फुटीकरणाय विशेषणविशेष्यभावव्यत्यासेन प्रतिपादिताः । अत्रालङ्कारसर्वस्वकृतापि पर्यायोक्तस्य सम्प्रदायागतमिदमेव लक्षणमङ्गीकृतं गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तमिति ॥

( अ०चं० )–निवेद्यतामिति । नलं प्रति दमयन्त्या उक्तिः । तव अ
मनः । कर्तृ । शिरीषकलिकामृदुत्वाभिमानमपनयन्तौ इमौ
कियद्दूरपर्यन्तं प्रयासे निधातुमिच्छति । हन्त खेदे । एतन्नि
कथ्यतामित्यर्थः ॥ देवमिति । देवतासार्वभौमं सकलदेवताऽधी
वन्दे । कीदृशम् । जलधिरेव शरधिस्तूणो यस्य तथाभूतं त्रिपु
शरीकृतस्य विष्णोर्विश्रान्तिस्थानत्वात् । तथा भुवनेषु विदिताः
व्यासः प्रष्ठोऽग्र्यो येषां ते व्यासप्रमुखा वसिष्ठाद्या यस्य वाहन
नानां वेदानामधिवाहा वाहनाधिकृता भवन्ति । 'पुरोगाग्रेसरप्र
सरपुरःसराः' इत्यमरः । एवमधरं भुवनं पातालं भूषणपेटिका स
त्वात् । पुष्करमाकाशं पुष्पवाटिका पुष्पस्थानीयचन्द्रोद्गमाधार
शतमख इन्द्रस्तत्प्रमुखा अग्न्यादयो दिक्पालाः शाटीपालना
दिगम्बरत्वेन दिशामेव शाटीरूपत्वात् । मनोभूश्चन्दनतरुः
स्थानीयभस्मसम्बन्धित्वात् । मदनभस्मना शिवेनाङ्गानामनु
पुराणेषु प्रसिद्धेः । अत्र लक्षणं सङ्गमयति–अत्रेति ॥ व्यवस्थितो
क्षायां सत्याम् । अवगम्या व्यङ्ग्याः ॥ विनेयत्वेति । शिक्षणीय
आदिना पातालगुप्तत्वादिपरिग्रहः ॥ अभिहिता इति । वाहा
तत्वादिना व्यासादिप्रतिपत्तौ समानवित्तिवेद्यत्वेन व्यासादिविने
देरपि तेष्ववगमादिति भावः । साक्षादेव व्यासादिविनेयत्वाद्य
किमिति न निर्दिष्टा इत्याशङ्क्याह–परन्त्विति ॥ यद्यप्युक्त
विशेषणभावेऽपि देवतासार्वभौमत्वमवगम्यते तथाऽपि स्फुटप्रति
तद्वैपरीत्यं कृतमित्यर्थः ॥

( कुव० )–" चक्राभिघातप्रसभाज्ञयैव
चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासवन्ध्यं
रतोत्सवं चुम्बनमात्रशेषम् ॥"

इति प्राचीनं तदुदाहरणं त्वन्यथा योजितम् । रा
धूगतेन विशिष्टेन रतोत्सवेन राहुशिरश्छेदः कारण
गम्यत इति । एवं च गम्यस्यैवाभिधानमिति
णस्यानुपपत्तिमाशङ्क्याह । यद्गम्यं तस्यैवाभि
लक्षणे विवक्षितमिति लक्षणं क्लिष्टगतया योजि
लोचनकृता 'पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते'

मेव लक्षणमङ्गीकृत्य तदुदाहरणे च कार्येण शब्दाभिहितेन कारणं व्यङ्ग्यं प्रदर्श्य तत्र लक्षणं लक्ष्यं नाम क्लिष्टगत्या योजितम् । वाच्यादन्येन प्रकारेण व्यङ्ग्येनोपलक्षितं सद्यदभिधीयते तत्पर्यायेण प्रकारान्तरेण व्यङ्ग्येनोपलक्षितमुक्तमिति सर्वोऽयं क्लेशः किमर्थ इति न विघ्नः । प्रदर्शितानि हि गम्यस्यैव रूपान्तरेणाभिधाने बहून्युदाहरणानि चक्राभिघातप्रसभाज्ञयैवेति प्राचीनोदाहरणमपि स्वरूपेण गम्यस्य भगवतो रूपान्तरेणाभिधानसत्त्वात्सुयोजमेव ॥

(चं०)-चक्रेति ॥ यो देवः सुदर्शनचक्रस्याभिघाते या प्रसभमाज्ञा तयैव राहुवधूजनस्य सुरतोत्सवमालिङ्गनस्योद्दामा उद्भटा ये विलासास्तैर्वन्ध्यं रहितं चुम्बनमात्रावशेषं चकारेत्यन्वयः । विशिष्टेनोक्तविशेषणविशिष्टेन । एवं चेदृशोदाहरणयोजने च ॥ अनुपपत्तिमिति । गम्यस्य राहुशिरश्छेदस्य भङ्ग्यन्तरेणानभिधानादव्याप्तिमाशङ्क्येत्यर्थः ॥ अभिधानायोगादिति । अयमाशयः । अत्र हि राहुशिरश्छेदकारीति वासुदेव इति वा व्यङ्ग्यं राहुवधूजनसम्बन्धितादृशरतोत्सवकारित्वेन प्रकारान्तरेणाभिधीयत इति न वक्तुं शक्यम् । धर्मिणो वासुदेवस्य प्रकारत्वेन यच्छब्दाभिहितत्वेन च व्यङ्ग्यत्वायोगात् । व्यङ्ग्यस्य च राहुशिरश्छेदकारित्वस्य वासुदेवत्वस्य वा धर्मस्य प्रकारान्तरेणानभिधानात् । तस्मात्पर्यायेण कार्यादिद्वारेणोक्तं गम्यमाक्षिप्तं वेति लक्षणार्थः । अभिधानमाक्षेपो व्यञ्जनं वा ॥ पर्यायोक्तमिति । क्वचित्पर्यायोक्त इति पाठस्त्वयुक्तः । व्यङ्ग्येनोपलक्षितमुक्तमिति व्याख्यानग्रन्थविरोधात् ॥ न विघ्न इति । यच्छब्दाभिहितस्यापि भगवतो वासुदेवत्वादिना रूपान्तरेण व्यङ्ग्यतया यथाश्रुते बाधकाभावादिति भावः । चाभिधाविषये कथं व्यञ्जनेति वाच्यम् । वासुदेवत्वादिना प्रतीयमाने भगवत्यभिधाविषयत्वासम्भवात् । तस्याः स्वावच्छेदकधर्मेणैव बोधकत्वात् । अत एवोक्तम् । " शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा । " इति । इह तु लक्षणाहेत्वभावाद्व्यञ्जनोपगम्यत इति ॥

(कुव० )-यत्तु तत्र राहुशिरश्छेदावगमनं तत्र प्रागुक्तरीत्या प्रस्तुतांकुर एव । प्रस्तुतेन च राहोः शिरोमात्रावशेषणालिङ्गनवन्ध्यत्वाद्यापादनरूपे वाच्ये भगवतो रूपान्तरे

उपपादिते तेन भगवतः स्वरूपेणावगमनं पर्याय
विषयः ॥ ६७ ॥

( अ०चं० )–ननु प्रस्तुतेन तादृशरतोत्सवरूपेण कार्येण प्रस्तुतस्य
शिरश्छेदनरूपकारणस्य प्रतीतौ चमत्कृतिविशेषस्तस्या अ
गमयति । तच्चालोच्यमानप्रस्तुतप्रशंसाया असम्भवादुक्तरी
योक्तरूपतयैव स्वीकर्तव्यमित्याशंक्याह–यत्त्विति ॥ अलङ्कारा
त्तानियमाभावेन प्रस्तुताङ्कुरस्याप्यलकारान्तरत्वादेवंविधश
स्यभङ्गेन प्राचीनलक्षणव्याख्यानमयुक्तमिति भावः । संक्षेपतो
मपि पर्यायोक्तविषयं विशदयति–प्रस्तुतेनेत्यादिना ॥ यत्तु भग
वगमनं विशेषणमर्यादालभ्यत्वेनासुन्दरं पर्यायोक्तस्य विष
तदविचारितरमणीयम् । न हि पर्यायोक्ते व्यङ्ग्यसौन्दर्यकृतो
त्तिविशेषः किन्तु भङ्ग्यन्तराभिधानकृत एव । व्यङ्ग्यं तु भङ्
भिधानतो सुन्दरमेव प्रायशो दृश्यते । यथा इहागन्तव्यमि
क्षिते व्यङ्ग्ये अयं देशोऽलङ्करणीयः सफलतामुपनेतव्य इत्या
दसुन्दरत्वोद्भावनमकिञ्चित्करमेव । अलङ्कारसर्वस्वकारग्रन्थ
द्भावनं तु तच्छिक्षाकारिणं प्रति न शोभते उपजीव्यत्वाद्ग्र
ग्रन्थस्याकिञ्चित्करमेव । युक्तिविरोध इति परोत्कर्षासहिष्णु
द्भावयितुरवगमयतीत्यलं विस्तरेण ॥ ६७ ॥

(चन्द्रा०)–पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाध
यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह ॥

( कुव० )–अत्र नायिकां नायकेन सङ्गमय्य चूतलता
व्याजेन निर्गच्छन्त्या सख्या तत्स्वाच्छन्द्यसम्पाद
साधनं पर्यायोक्तम् ।

यथा वा–देहि मत्कन्दुकं राधे परिधाननिगूहितम् ।
इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु
पूर्वत्र परेष्टसाधनमत्र कन्दुकशोधनार्थं नीवीवि
व्याजेन स्वेष्टसाधनमिति भेदः ॥ ६८ ॥

( अ०चं० )–प्रकारान्तरेण पर्यायोक्तं लक्षयति–पर्यायोक्तमिति ॥
व्याजेन मिषेण स्वस्य परस्य वा इष्टस्य यत्साधनं सम्पाद

पर्यायोक्तम् । पर्यायेण व्याजरूपेणोक्तं यत्रेति व्युत्पत्तेः ॥ सम्पादनेति । सम्पादनरूपं यदिष्टं तत्साधनं तत्करणमित्यर्थः ॥ देहीति । परिधानेऽधरवस्त्रेण निगूहितमाच्छादितमित्यर्थः । एवं च प्रकारद्वयसाधारणं अन्यतरत्वं सामान्यलक्षणं बोध्यम् ॥ ६८ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां पर्यायोक्तालङ्कारप्रकरणम् ॥ २९ ॥

---

## व्याजस्तुत्यलङ्कारः ३०.

(...)-उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिंदयोः।
...: स्वर्धुनि विवेकस्ते पापिनो नयसे दिवम् ॥६९॥
साधु दूति पुनः साधु कर्तव्यं किमतः परम् ॥
यन्मदर्थे विलूनासि दन्तैरपि नखैरपि ॥ ७० ॥

(...०)-निन्दया स्तुतेः स्तुत्या निन्दाया वा अवगमनं व्याजस्तुतिः । कः स्वर्धुनीत्युदाहरणे विवेको नास्तीति निन्दाव्याजेन गङ्गा सुकृतिवदेव महापातकादिकृतवतोऽपि स्वर्गं नयतीति व्याजरूपया निन्दया तत्प्रभावातिशयस्तुतिः । साधु दूतीत्युदाहरणे मदर्थे महान्तं क्लेशमनुभूतवत्यसीति व्याजरूपया स्तुत्या मदर्थं न गतासि किन्तु रन्तुमेव गतासि धिक्त्वां दूतिकाधर्मविरुद्धकारिणीमिति निन्दावगम्यते ।

यथा वा-कस्ते शौर्यमदो योद्धुं त्वय्येकं सप्तिमास्थिते ।
सप्तसप्तिसमारूढा भवन्ति परिपन्थिनः ॥

(अ०चं०)-उक्तिरिति ॥ अत्र निन्दास्तुतिभ्यामिति स्तुतिनिन्दयोरिति चेतरेतरयोगो न विवक्षितः । तथा च निन्दया स्तुतेः स्तुत्या च निन्दायाः स्तुत्या स्तुतेश्चोक्तिरभिव्यक्तिर्व्याजस्तुतिरित्यर्थः । प्रथमे व्याजेन स्तुतिरिति चरमयोर्व्याजरूपा स्तुतिरिति च व्युत्पत्तेः । अत एव व्याजस्तुतिपदार्थानुगमाभावान्निन्दया निन्दाभिव्यक्तिर्व्याजनिन्दाख्यमलङ्कारान्तरमित्यग्रे वक्ष्यते । अत एवमाद्ये प्रकारद्वये

स्तुतिनिन्दयोः समानविषयत्वभिन्नविषयत्वाभ्यां प्रत्येकं द्वैविध्यमिति । चत्वारो भेदाः । अन्त्यस्तु भिन्नविषयस्तुतिक एक एवेति पञ्च ... लक्षणं तु व्याजनिन्दाभिन्नत्वे सति स्तुतिनिन्दान्यतरपर्यवसायि... तिनिन्दान्यतरत्वं सर्वानुगतं बोध्यम् ॥ कस्त इति । नृपं प्रति ... रुक्तिः । त्वयि योद्धुमेकं सप्तिमश्वमास्थिते आरूढे सति ... शत्रवः सप्ताश्वसमारूढा भवन्तीत्यन्वयः । सप्त सप्तयोऽश्वा ... सूर्यस्सप्त च ते सप्तयोऽश्वास्तत्समारूढा इति द्वितीयोर्थो ... तकः । त्वया सम्मुखाहताः सूर्यमण्डलं भित्त्वा दिवमुपगताः ... स्तुतौ पर्यवसानम् ॥

( कुव० )-अर्द्धं दानववैरिणा गिरिजयाप्यर्द्धं शिवस्या...
देवेत्थं जगतीतले स्मरहराभावे समुन्मीलति ।
गङ्गा सागरमम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥

अत्राद्योदाहरणे सप्तसप्तिपदगतश्लेषमूलनिन्दा... स्तुतिर्व्यज्यते । द्वितीयोदाहरणे सर्वज्ञः सर्वेश्वरो... राज्ञः स्तुत्या व्याजरूपया मदीयवैदुष्यादि दा... सर्वं जानन्नपि बहुप्रदानेन रक्षितुं शक्तोऽपि मह्यं ... न ददासीति निन्दा व्यज्यते । सर्वमिदं निन्दास्तुत्योरे... कविषयत्वे उदाहरणम् । भिन्नविषयत्वे निन्दया ... भिव्यक्तिर्यथा-

कस्त्वं वानर रामराजभवने लेखार्थसंवाहको
यातः कुत्र पुरागतः स हनुमान्निर्दग्धलङ्कापुरः ।
बद्धो राक्षससूनुनेति कपिभिः सन्ताडितो भर्त्सितः
स व्रीडात्तपराभवो वनमृगः कुत्रेति न ज्ञायते ॥

अत्र हनुमन्निन्दया इतरवानरस्तुत्यभिव्यक्तिः ॥

( अ०चं० )-अर्द्धमिति ॥ शिवस्य देहार्द्धं दानवानां वैरिणा हरिणा ... तम् । हरिहरात्मकस्यैकस्य विग्रहस्य प्रसिद्धेः । एवं गिरिजया ... ष्टार्द्धमाहृतम् । हे देव राजन्नित्थमुक्तप्रकारेण जगतीतले स्मरहरा... भावे समुन्मीलति प्रकाशमाने सति गङ्गा सागरं प्रत्यगमदित्या... नागाधिपः शेषः क्ष्मातलं पातालम् । त्वामिति पूर्वान्वितम् ॥

ति । विद्वत्तादीत्यर्थः । आदिना तपःशीलादिपरिग्रहः । दारिद्र्यादी-
आदिपदेन कुटुम्बबाहुल्यादिपरिग्रहः । न चात्र राजवर्णनप्रस्तावे कथं
तिव्याजरूपत्वमिति वाच्यम् । स्तुतिपर्यवसानविवक्षायां स्वकीय-
क्षाटनोद्घाटनस्यासङ्गतत्वेन स्तुतेरुक्तनिन्दारूपोपालम्भपर्यवसान-
यानुभवसिद्धस्याविरुद्धत्वात् ॥ कस्त्वमिति । अङ्गदं प्रति कस्य-
चिद्राक्षसस्य प्रश्नः । रामरूपस्य राज्ञो भवने लेखार्थस्य सन्देशस्य
हकोऽहमित्युत्तरम् । पुरा पूर्वमागतो निर्दग्धलङ्कापुरः स हनुमान्
त्र यात इति पुनः पूर्वस्य प्रश्नः । बद्ध इत्याद्युत्तरार्द्धमङ्गदस्योत्तरम् ।
राक्षसस्य रावणस्य सूनुना बद्ध इति हेतोः कपिभिर्वानरैः सम्यक्
ताडितस्तर्जितः स वनमृगो हनुमान् व्रीडया लज्जया आत्तः प्राप्तः
पराभवो येन तादृशः कुत्र यात इति न ज्ञायत इत्यन्वयः ॥

(व० )–स्तुत्या निन्दाभिव्यक्तिर्यथा–

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा
 नैषां गर्ववचः शृणोषि न च तान्प्रत्याशया धावसि ।
काले बालतृणानि खादसि परं निद्रासि निद्रागमे
 तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥

अत्र हरिणस्तुत्या राजसेवानिर्विण्णस्यात्मनो निन्दा-
भिव्यज्यते । अयमप्रस्तुतप्रशंसाविषय इत्यलङ्कारसर्वस्व-
कारः । तेन हि सारूप्यनिबन्धनाप्रस्तुतप्रशंसोदाहरणा-
न्तरं वैधर्म्येणापि दृश्यते ।

यथा–धन्याः खलु वने वाताः कह्लाराः सुखशीतलाः ।
 राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः ॥

अत्र वाता धन्या इत्यप्रस्तुतार्थादहमधन्य इति वैध-
र्म्येण प्रस्तुतोऽर्थः प्रतीयत इति व्युत्पादितम् । इयमेवाप्रस्तु-
तप्रशंसा न कार्यकारणनिबन्धनेति दण्डी । यदाह–

"अप्रस्तुतप्रशंसा स्यादप्रकाण्डे तु या स्तुतिः ।
सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ॥
अर्थैरयत्नसुलभैर्जलदर्भाङ्कुरादिभिः ।
सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते ॥
राजानुवर्तनक्लेशनिर्विण्णेन मनस्विना ।" इति ।

वस्तुतस्त्वत्र व्याजस्तुतिरित्येव युक्तं, स्तुत्या निन्दा-
व्यक्तिरित्यप्रस्तुतप्रशंसातो वैचित्र्यविशेषसद्भावात्।
न्यथा प्रसिद्धव्याजस्तुत्युदाहरणेष्वप्यप्रस्तुताभ्यां
न्दास्तुतिभ्यां प्रस्तुते स्तुतिनिन्दे गम्येते इत्येत
व्याजस्तुतिमात्रमप्रस्तुतप्रशंसा स्यात् ॥

( अ० चं० )–यदिति । हे कुरङ्ग यद्यस्माद्धनिनां मुखं मुहुर्मुहुर्वारंवा-
से न पश्यसि । मृषा मिथ्या चाटून् प्रियशब्दान्न वदसि । यदि-
त्र सम्बध्यते । एषां धनिनां गर्वयुक्तवचनं न शृणोषि । तान्धनि-
ति आशया धनाशया न धावसि । परं केवलं काले क्षुधासमये
भक्षयसि निद्राया आगमे च निद्रां प्राप्नोषि तत्तस्मात्कुत्र
नाम तपस्तप्तं तद् ब्रूहीत्यन्वयः । निर्विण्णस्य खिन्नस्य । तेन
इति व्युत्पादितमित्यग्रेतनेनान्वयः ॥ धन्या इति । कह्लारं जल-
शेषः तत्सम्बन्धिनः काह्लाराः सुखयन्तीति सुखाश्च ते शीतलाश्च
अप्रस्तुतेति । अप्रकाण्डे अप्रस्तावे । तथा चाप्रस्तुता चासौ
चेति व्युत्पत्तिरिति भावः । न परसेविनोऽपरसेविनः । प्रशस्यते
मतद्वयेऽप्यस्वरसबीजं दर्शयति–वस्तुतस्त्विति ॥ अभिव्यक्ति-
योऽप्रस्तुतप्रशंसातो वैचित्र्यस्य विषय आलम्बनभूतो विशेष इत्
अन्यथा ततो वैचित्र्येऽपि तदन्तर्भावाङ्गीकारे ॥

( कुव० ) एवं चानया प्रक्रियया यत्रान्यगतस्तुतिविव-
न्यस्तुतिः क्रियते तत्रापि व्याजस्तुतिरेव । अन्य-
व्याजेन तदन्यस्तुतिरित्यर्थानुगमसद्भावात् ।

यथा–शिखरिणि क नु नाम कियच्चिरं
किमभिधानमसावकरोत्तपः ।
तरुणि येन तवाधरपाटलं
दशति बिम्बफलं शुकशावकः ॥

अत्र शुकशावकस्तुत्यां नायिकाधरसौभाग्यातिशयस्तु-
र्व्यज्यते ॥ ६९ ॥ ७० ॥

( अ० चं० )–एवं चेति । अन्यगतस्तुतिनिन्दाभ्यामन्यगतनिन्दास्तु-
व्यक्त्योर्व्याजस्तुतित्वसिद्धौ चेत्यर्थः । प्रक्रियया प्रकारेण ॥ शि-
णीति । नायिकां प्रति नायकस्योक्तिः । हे तरुणि असौ शुकशा-

...म वितर्के । क नु कस्मिञ्शिखरिणि पर्वते कियत्कालं चिरं किमभि-
...नं किंनामकं तपः अकरोद्येन हेतुना तवाधरवत्पाटलं रक्तवर्णं बिम्ब-
...लं दशतीत्यन्वयः ॥ ६९ ॥ ७० ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां व्याजस्तुत्यलङ्कार-
प्रकरणम् ॥ २० ॥

---

## व्याजनिन्दालङ्कारः ३१.

(...०)-निन्दाया निन्दया व्यक्तिर्व्याजनिन्देतिगीयते।
विधे स निन्द्यो यस्ते प्रागेकमेवाहरच्छिरः ॥ ७१ ॥

(...व०)-अत्र हरनिन्दया विषमविपाकं संसारं प्रवर्तयतो
विधेरभिव्यङ्ग्या निन्दा व्याजनिन्दा ।

यथा वा-विधिरेव विशेषगर्हणीयः

करट त्वं रट कस्तवापराधः ।
सहकारतरौ चकार यस्ते
सहवासं सरलेन कोकिलेन ॥

अन्यस्तुत्यान्यस्तुत्यभिव्यक्तिरिति पञ्चमप्रकारव्याज-
स्तुतिप्रतिबन्दीभूतेयं व्याजनिन्दा ॥

(अ०चं०)-व्याजनिन्दां लक्षयति-निन्दाया इति ॥ यत्रान्यनिन्दयाऽन्य-
स्य निन्दाया अभिव्यक्तिः पर्यवस्यति सा व्याजनिन्दा इतरनिन्दाव्या-
जेन निन्देति व्युत्पत्तेः ॥ विधे इति । हे विधे ब्रह्मन् प्राक् पूर्वं ते तवैकमेव
शिरो यः अहरत् अच्छिनत् स एवार्थात् हरो निन्द्य इत्यन्वयः । निन्दये-
त्यभिव्यङ्ग्येत्यनेनान्वितं निन्दयाभिव्यङ्ग्या विधेर्निन्दा व्याजनिन्देत्य-
न्वयः । विषमविपाकं दारुणपरिणामम् ॥ विधिरेवेति । विशेषतो गर्ह-
णीयः निन्दनीयः । हे करट काक त्वं रट रटनं कुरु । योऽसौ विधिः
आम्रवृक्षे सरलेन सौम्येन कोकिलेन सहवासं तव चकारेत्यन्वयः । ननु
केनाप्यालङ्कारिकेणानुक्ताया व्याजनिन्दायाः कथमलङ्कारत्वेनाङ्गीकर-
णमित्याशङ्क्याह-प्रतिबन्दीति ॥ तुल्ययुक्त्या प्रतिबन्दीस्थानीयेत्यर्थः ।
तथा च स्तुतिवन्निन्दायामप्यप्रस्तुतप्रशंसातो वैचित्र्यविशेषात्तदनन्त-
र्भावे व्याजस्तुतौ चार्थानुगमाभावादनन्तर्भावे पृथगलङ्कारताया औचि-
त्यापातत्वात्प्राचीनैरनुक्तापि स्वीकर्तुमुचितेत्याशयः ॥

( कुव० )—ननु यत्रान्यस्तुत्यान्यस्तुतेरन्यनिन्दयान्यनि याश्च प्रतीतिस्तत्र व्याजस्तुतिव्याजनिन्दालङ्कारयो पगमे स्तुतिनिन्दारूपा प्रस्तुतप्रशंसोदाहरणेष्वप्रस्तुतप्र सा न वक्तव्या । तेषामपि व्याजस्तुतिव्याजनिन्द क्रोडीकारसम्भवादिति चेदुच्यते । यत्राप्रस्तुतवृत्ता त्स्तुतिनिन्दारूपात्तत्सरूपः प्रस्तुतवृत्तान्तः प्रतीयते ' शिछद्राणि भूयांसि' इत्यादौ तत्र लब्धावकाशा सारूप बन्धनाप्रस्तुतप्रशंसा अत्रापि वर्तमाना न निवारयि क्या। अन्यस्तुत्याऽन्यस्तुतिरन्यनिंदयाऽन्यनिन्देत्येवं स्तुतिव्याजनिन्दे अपि सम्भवतश्चेत्कामं ते अपि स ताम् । न त्वस्याः परित्यागः । यद्यपि विधिरेव विशेषग इति श्लोके विधिनिंदया तन्मूलकाकनिन्दया चावि स्य प्रभोस्तेन च विद्वत्समतया स्थापितस्य मूर्खस्य च प्रतीयत इति तत्र सारूप्यनिबंधनाऽप्रस्तुतप्रशंसाप्या तथापि सैव व्याजनिंदामूलेति प्रथमोपस्थिता सापि दुर्वारा । एवं व्याजनिंदामूलकव्याजनिंदारूपेयमप्र प्रशंसेति चमत्कारातिशयः । एवमेव व्याजस्तुतिम व्याजस्तुतिरूपाप्यप्रस्तुतप्रशंसा दृश्यते ।

यथा वा—

लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः
स्वच्छंदं चरतो जनस्य हृदये चिंताज्वरो निर्मितः ।
एषापि स्वगुणानुरूपरमणाभावाद्वराकी हता
कोऽर्थश्चेतसि संहतोऽत्र विधिना तन्वीमिमां तन्वता ॥

अत्राप्रस्तुतायास्तरुण्याः सृष्टिनिंदाव्याजेन तन्नि व्याजेन च तत्सौन्दर्यप्रशंसाप्रशंसनीयत्वेन कविविव तायाः स्वकवितायाः सृष्टिनिन्दाव्याजेन तन्निन्दा जेन च शब्दार्थचमत्कारातिशयप्रशंसायां पर्यवस्य

अस्य श्लोकस्य वाच्यार्थविषये यद्यपि नात्यन्तसामञ्जस्यं, न हीमे विकल्पा वीतरागस्येति कल्पयितुं शक्यम्। रसाननुगुणत्वाद्वीतरागहृदयस्याप्येवंविधविषयेष्वप्रवृत्तेश्च। नापि रागिण इति युज्यते। तदीयविकल्पेषु वराकीति कृपणतालिङ्गितस्य हतेत्यमङ्गलोपहितस्य च वचसोऽनुचितत्वात्तुल्यरमणाभावादित्यस्यात्यन्तमनुचितत्वाच्च स्वात्मनि तदनुरूपतासम्भावनायामपि रागित्वे हि पशुप्रायता स्यात्। तथापि विवक्षितप्रस्तुतार्थतायां न किञ्चिदसामञ्जस्यम्। अत एवास्य श्लोकस्याप्रस्तुतप्रशंसापरत्वमुक्तं प्राचीनैः। वाच्यासम्भवेऽप्यप्रस्तुतप्रशंसोपपत्तेरिति ॥ ७१ ॥

(अ० चं० )–प्रागुक्तयोरेकः कृती शकुन्तेष्वित्यावद्धकृत्रिमेत्यनयोरप्रस्तुतप्रशंसोदाहरणत्वासङ्गतिमाशङ्कते–नन्विति ॥ क्रोडीकारः स्वविषयीकरणम्। अन्यत्र लब्धात्मकस्यालङ्कारद्वयस्य क्वचित्सङ्करेऽपि न दोष इत्याशयेन समाधत्ते--यत्रेति ॥ एतच्च इत्यादावित्यनेनान्वितम्। अस्या अप्रस्तुतप्रशंसायाः। सैवाप्रस्तुतप्रशंसैव ॥ लावण्येति। इमां तन्वीं तन्वता सृजता वेधसा चेतसि कोऽर्थः कामनाविषयभूतो विनिहितोऽभिसंहितः। किं प्रयोजनमुद्दिश्येयं निर्मितेत्यर्थः। नन्वनायासेनातिसुन्दरतन्वीनिष्पत्तिरेव प्रयोजनं तदभावेऽपि वा लीलामात्रेण तन्निर्माणं स्यादत आह–लावण्येत्यादि ॥ यतो लावण्यरूपस्य द्रविणस्य धनस्य व्ययो न गणितः। महान्क्लेशोर्ज्जितः कृतः स्वेच्छाचारिणो जनस्य उदासीनस्यापि हृदये चिन्तैव ज्वरो निर्मितः। एषापि वराकी दीना स्वगुणानुरूपस्य वरस्याभावाद्धतेव हता नष्टप्राया। तथा च बह्वायाससाध्यत्वादनिष्टानुबन्धित्वाच्च न तन्व्याः प्रयोजनत्वं नापि लीलामात्रेण तन्निर्माणं च सम्भवतीति भावः। तन्निन्दाव्याजेन तरुणीनिन्दाव्याजेन। तत्सौन्दर्यप्रशंसाशब्दार्थचमत्कारातिशयप्रशंसायां पर्यवस्यतीत्यन्वयः। तन्निन्दाव्याजेन स्वकवितानिन्दाव्याजेन। कविता सौन्दर्यरूपा। प्रस्तुतार्थस्यात्यन्तमस्फुटत्वात्कथमस्य पद्यस्य तत्परत्वमित्याशङ्कामपनेतुं भूमिकामारचयति–अस्येत्यादि ॥ रसाननुगुणत्वादिति ॥ वीतरागे शृङ्गारस्यासम्भवादिति भावः। ननु शृङ्गारासम्भवेऽपि तन्वीनिर्माणनिन्दया शान्तरसपरिपोषाद-

स्त्येव रसानुगुणत्वमत आह-वीतरागेति ॥ नापि रागिण इत्यनन्
मिमे विकल्पा इत्यनुषज्यते ॥ विवक्षितेति । स्वकवितासौन्दर्य
त्यर्थः। अत एव वाच्यार्थासामञ्जस्यादेव। वाच्यासम्भवेऽपि वाच्यसाम
ञ्जस्यासम्भवेऽपि । तथा च वाच्यार्थासामञ्जस्यमेवास्फुटेऽप्यप्रस्तुता
तात्पर्यं गमयतीति भावः ॥ ७१ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायां व्याजनिन्दा-
लङ्कारप्रकरणम् ॥ ३१ ॥

---

## आक्षेपालङ्कारः ३२.

(चन्द्रा०)-आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणा
चन्द्र सन्दर्शयात्मानमथवास्ति प्रियामुखम्॥७

( कुव० )-अत्र प्रार्थितस्य चन्द्रदर्शनस्य प्रियामुखसत्त्वेना
र्थक्यं विचार्याथ वेत्यादिसूचितः प्रतिषेध आक्षेपः।

यथा वा-साहित्यपाथोनिधिमन्थनोत्थं
कर्णामृतं रक्षत हे कवीन्द्राः ।
यत्तस्य दैत्या इव लुण्ठनाय
काव्यार्थचोराः प्रगुणीभवन्ति ॥
गृह्णन्तु सर्वे यदि वा यथेच्छं
नास्ति क्षतिः क्वापि कवीश्वराणाम् ।
रत्नेषु लुप्तेषु बहुष्वमर्त्यै-
रद्यापि रत्नाकर एव सिन्धुः ॥

अत्र प्रथमश्लोकेन प्रार्थितस्य काव्यार्थचोरेभ्यो र
णस्य स्वोल्लिखितवैचित्र्याणां समुद्रगतरत्नजालवदक्षय
विचिन्त्य प्रतिषेध आक्षेपः ॥ ७२ ॥

( अ०चं० )-आक्षेप इति । स्वयमुक्तस्यार्थस्य किञ्चिन्निमित्तमभिसन्
प्रतिषेध आक्षेपः ॥ सूचितेति । पक्षान्तरपरिग्रहस्य पूर्वपक्षप्रतिक्षे
यतत्वादिति भावः । न चात्र कैमर्थ्यरूपपञ्चमप्रतीपप्रभेदेन गता
शङ्कनीयम् । तस्यात्र प्रतिषेधप्रतिनिमित्तत्वेनाप्राधान्यात् । अस
ग्धमुदाहरति-साहित्येति ॥ हे कविश्रेष्ठाः साहित्यसमुद्ररूपाणां

तादीनां मन्थनादिव परिशीलनादुत्थितमुत्पन्नं कर्णयोरमृतमिवाह्लादकं काव्यं रक्षत । यद्यस्मात्तस्य लुण्ठनार्थं दैत्या इव काव्यरूपस्यार्थस्य वित्तस्य चोराः प्रगुणीभवन्ति बहुलीभवन्तीत्यन्वयः ॥ गृह्णन्त्विवति । यदि वेत्यथवेत्यनेन समानार्थम् । लुप्तेषु अपहृतेषु । स्वोल्लिखितेति स्वयमुद्धावितेत्यर्थः । वैचित्र्याणामर्थवैचित्र्याणाम् ॥ ७२ ॥

( चन्द्रा० )—निषेधाभासमाक्षेपं बुधाः केचन मन्वते ।
नाहं दूती तनोस्तापस्तस्याः कालानलोपमः ७३॥

( कुव० )—केचिदलङ्कारसर्वस्वकारादय इत्थमाहुः । न निषेधमात्रमाक्षेपः किं तु यो निषेधो बाधितः सन्नर्थान्तरपर्यवसितः किञ्चिद्विशेषमाक्षिपति स आक्षेपः । यथा दूत्या उक्तौ नाहं दूतीति निषेधो बाधितत्वादाभासरूपः सङ्घटनकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन्निदानीमिवागत्य नायिकोज्जीवनीयेति विशेषमाक्षिपति ।

यथा वा—नरेन्द्रमौले न वयं राजसन्देशहारिणः ।
जगत्कुटुम्बिनस्तेऽद्य न शत्रुः कश्चिदीक्ष्यते ॥

अत्र सन्देशहारिणामुक्तौ न वयं सन्देशहारिण इति निषेधोऽनुपपन्नः सन्धिकालोचितकैतववचनपरिहारेण ह्यर्थवादित्वे पर्यवस्यन्सर्वजगतीपालकस्य तव न कश्चिदपि शत्रुभावेनावलोकनीयः किंतु सर्वेऽपि राजानो भृत्यभावेन संरक्षणीया इति विशेषमाक्षिपति ॥ ७३ ॥

( अ० चं० )—अर्थान्तरपर्यवसिताऽर्थान्तरप्रतियोगिकत्वेनावस्थितः।विशेषं व्यङ्ग्यार्थविशेषम् ॥ सङ्घटनेति । संयोजनकाले उचितं यत्कैतववचनं मिथ्यावचनं तस्य परिहारस्तेनोपलक्षिते यथार्थवादित्वे इत्यर्थः । नाहं दूतीत्यत्र हि दूतीपदेन दूतीगतमिथ्यावादित्वविशिष्टं लक्ष्यते । तदभावस्तु-यद्यपि न यथार्थवादित्वं तथापि तदुपलक्ष्यत्वात्तत्पर्यवसानोक्तिः॥ नरेन्द्रेति । सन्धिकरणार्थमागतानां दूतानामुक्तिः । नरेन्द्राणां राज्ञां मौलिः श्रेष्ठः ॥ सन्धीति । सन्धिकाले उचितं यत्कैतववचनं तत्परिहारेणोपलक्षित इति पूर्ववदर्थः । अत्राहुः "सन्देशहारिषु तन्निषेधस्य बाधात् सन्देशहारिपदेन कैतववचनप्रयोक्तृत्वविशिष्टं लक्ष्यते । तन्निषे-

धेन च सत्यवादित्वरूपो विशेषो व्यज्यत इत्ययमेव निषेधेन विशे क्षेपो न तु सर्वजगतीपालकस्येत्यादिर्विशेषो निषेधेन केवलेनाक्षे शक्यते। तस्य जगत्कुटुम्बिन इत्युत्तरार्द्धगम्यत्वात्। एवं स्थिते कथ मुच्यते तव न कश्चिदपीत्यादि" इति । तत्रोच्यते न वयमिति निषेधाभावे केवलादुत्तरार्धात्रोक्तविशेषावगतिः स्यात्। सन्धिका च्चितकैतववचनत्वेनैव सम्भाव्यमानत्वात् । अपि तु तत्कालीनसं भिप्रायमात्रावगमः । निषेधेन तु तत्परिहारे युक्त उक्तिविशेषाव इत्यनुभवसाक्षिकमेतत् । सत्यवादित्वादिकं तूक्तविशेषे व्यञ्ज द्वारभूतं न तु तदेव विशेषरूपमचमत्कारित्वात्। अत एव नाहं दू त्यत्र वस्तुवादित्वादिर्विशेषो व्यज्यत इत्यलङ्कारसर्वस्वकारः। वस्तु दित्वमादिद्वारभूतं यस्य तादृशो विशेष इति तदर्थ इति । एतेन दूतीति पूर्वोदाहरणमपि व्याख्यातम् ॥ ७३ ॥

**( चं० )-आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च तिरोहिते ।**
**गच्छ गच्छसि चेत्कान्त तत्रैव स्याज्जनिर्मम ॥७४**

( कुव० )-अत्र गच्छेति विधिर्व्यक्तः मा गा इति निषेधस्ति रोहितः । कान्तोद्देश्यदेशे निजजन्मप्रार्थनयात्ममरणस सूचनेन गर्भीकृतः ।

यथा वा-न चिरं मम तापाय तव यात्रा भविष्यति।
यदि यास्यसि यातव्यमलमाशङ्कयापि ते ॥

अत्रापि न चिरं मम तापायेति स्वमरणसंसूचनेन ग ननिषेधो गर्भीकृतः ॥ ७४ ॥

( अ० चं० )-अस्यैव प्रभेदान्तरमाह-आक्षेपोऽन्य इति ॥ प्रार्थनया मर सूचनद्वारेण गर्भितो व्यङ्ग्यत्वेनान्तर्भावितः । एतच्च तिरोहित इत्य स्यार्थकथनं तदेवमपह्नुतिभिन्नत्वे सति चमत्कारकारिनिषेधत्वं सामा न्यलक्षणं बोध्यम् ॥ ७४ ॥

इत्यलङ्कारचन्द्रिकायां कुवलयानन्दटीकायामाक्षेपा लङ्कारप्रकरणम् ॥ ३२ ॥

## विरोधाभासालंकारः ३३.

(मं०)-आभासत्वे विरोधस्य विरोधाभास इष्यते।
विनापि तन्वि हारेण वक्षोजौ तव हारिणौ ॥७८॥

(कुव०)-अत्र हाररहितावपि हारिणौ हृद्याविति श्लेषमूलको विरोधाभासः।

यथा वा-प्रतीपभूपैरिव किं ततो भिया
विरुद्धधर्मैरपि भेत्तृतोज्झिता।
अमित्रजिन्मित्रजिदोजसा स य-
द्विचारदृक्चारदृगप्यवर्तत ॥

अत्र विरोधसमाधानोत्प्रेक्षाशिरस्को विरोधाभास इति पूर्वस्माद्भेदः ॥ ७५ ॥

(अ०चं०)-आभासत्व इति ॥ विरोधस्याभासत्वे आपाततो भासमानत्वे सति विरोधाभासो नामालङ्कारः। आभासत इत्याभासः विरोधश्चासावाभासश्चेति व्युत्पत्तेः। ईषदर्थकेन चाङा भानस्यापातरूपत्वमर्थान्तरपरिहार्यत्वरूपं बोध्यते। तथा चैकाधिकरण्येन प्रतीयमानयोः कार्यकारणत्वेनागृह्यमाणयोर्धर्मयोराभासमानाऽपर्यवसन्नविरोधत्वं लक्षणं द्रष्टव्यम्। "अप्यशनिरशनिश्च तमुच्चैरित्यादावतिव्याप्तिवारणायाद्यं विशेषणम्। "लाक्षारसासिक्तं रक्तं तच्चरणद्वयम्" इति विभावनावारणाय द्वितीयम्। पर्यवसितस्य विरोधस्य दोषत्वादपर्यवसन्नत्वं विरोधविशेषणमिति दिक्॥श्लेषेति।हारोऽनयोरस्तीत्यर्थे विरोधः, मनोहारिणावित्यर्थेन तत्परिहारः॥प्रतीपेति। तस्मान्नलाद्भयेन कृत्वा प्रतिकूलनृपैरिव विरुद्धधर्मैरपि भेत्तृता भेदकारिता त्यक्ता। किमित्युत्प्रेक्षा। यस्मात्स नलः अमित्राणां शत्रूणां जयकृदपि ओजसा मित्रस्य रवेर्जयकृत्। अथ च मित्रजिदेव न मित्रजिदिति विरोधः। चारदृष्टिरपि विचारे दृष्टिर्यस्य तादृशः विगतचारदृगिति च विरोधः॥ विरोधेति। विरोधसमाधानरूपोत्प्रेक्षा शिरः प्रधानं यस्य तादृश इत्यर्थः। यत्तु विरोधसमाधानात्मिकया मुखस्थितयोत्प्रेक्षया विरोधस्योत्थानमेव भग्नमिति कथमत्र विरोधालङ्कार इति केनचित्सुमनसापि विमनसेवाभिहितं, तदसारम्-विरोधभानमन्तरेण विरुद्धधर्मैरपीत्याद्युत्प्रेक्षाया एवानुत्थानेन श्लेषमूल-

